# प्रास्ताविकम् ।

यज्ञेन यज्ञमयजन्त पुरापि देवा यज्ञार्थमेव निगमागमसंप्रवृत्तिः ।
ते कुण्डमण्डपविवेकमृते न साध्यास्तस्मादयं परिकरोऽखिलकुण्डसिद्ध्यै ॥

इह जगति निजनिजप्राक्तनप्रारब्धायत्तैर्भ्रमिमत्संसारचक्रपरिवर्तपरवत्त्वेन संप्राप्तैस्त्रैवर्णिकैर्विशेषतश्च ब्राह्मणैर्निःश्रेयससाधनीभूतपुरुषार्थचतुष्टयसिसाधयिषुभिरखिलजीवातुत्वेन धर्मएव समादरणीयः । धर्मव्यवस्थायां चैहिकामुष्मिकफलदत्वेन निर्णीताः श्रौतस्मार्तयज्ञा एव धर्मसेतुबन्धैकबद्धपरिकरैर्महर्षिभिरिति निर्विवादमेव । तत्र श्रौतकाण्डमग्न्याधानादिचयनान्तं स्वतन्त्रमेवैतरेयब्राह्मणाश्वलायनश्रौत्रसूत्रादिषु शुक्लयजुर्वाजसनेयिसंहितायामप्यामूलान्तमखिलं व्यक्तं दरीदृश्यते । इष्टापूर्तादिकर्मकाण्डं श्रुतिनिर्दिष्टमपि विशेषतः स्मृत्याद्युपजीवित्वात्स्मार्तत्वेन जेगीयते । श्रौतस्मार्तोभयविधमपि यज्ञजातमुपक्रम्य श्रीभगवद्गीतासु तत्रतत्र 'यज्ञार्थात्कर्मणोऽन्यत्र' 'यज्ञशिष्टाशिनः सन्तः' 'यज्ञो दानं तपश्चैव' 'सह यज्ञाः प्रजाः सृष्ट्वा' 'यज्ञाद्भवति पर्जन्यः' 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः' इत्यादिप्रमाणैर्यज्ञमेव प्रशशंस श्रीभगवान् । तत्सिद्धं निखिलैर्निःश्रेयसार्थिभिर्यज्ञा एवाचरणीया इति । यज्ञप्रवृत्तावपि तत्रावश्यकमङ्गोपाङ्गद्रव्यदेवताग्न्यायतनकुंडवेदिकास्थंडिलमण्डपाद्याराद्दुपकारकज्ञानमतीवावश्यकम् । यदंतरा न यज्ञादीनां प्रतिपत्तिः । यद्यपि कुण्डादिविषयप्रतिपादका

निबन्धाः कुण्डार्कोदयः प्राचीनाः सन्ति तत्र च केचन वृत्तसाध्याः कतिपये चतुरस्रसाध्यास्तथापि तेषां दुरूहत्वात्सर्वैर्विशेषतश्चाल्पधीबलैर्नहि ते यथावदाकलयितुं शक्याः सन्ति । यथावदनवगमादङ्गवैकल्ये तावन्न ह्याचरितकर्मणां फलसिद्धिः किंत्वनर्थापत्तिरेवापतेत् । तथाच वसिष्ठ-संहितायाम्—अनेकदोषदं कुण्डमत्र न्यूनाधिकं यदि । तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं शुभमिच्छता ॥ इति ॥ क्रियासारे—न्यूनाधिकप्रमाणं यत्कुण्डं कुर्युरमेखलम् । शृङ्गाररहितं यच्च यजमानविनाशकृत् ॥ इति ॥ इत्याद्यनेकशो दोषा यथोक्तमानन्यूनाधिक्ये तत्रतत्र निर्दिष्टाः सन्ति । अतः सुकुमारमतीनामपि कुण्डमण्डपादिज्ञानायायं समुद्यम आवश्यकः । वृत्तचतुरस्रोभयविधयोर्वृत्तपद्धतिरेव ज्यायसीति महाशयैः कुण्डार्ककारादिभिः प्रतिपादितमदोनाम्निग्रन्थे । सैवैतद्ग्रन्थप्रणेत्रोरीकृता । सत्सु नैकशः कुण्डप्रतिपादकग्रन्थेषु कुतोऽयं ग्रन्थप्रणयनाड-म्बर इति न शंक्यम् । किंचिज्ज्ञेष्वस्य चारितार्थ्यात् । अत्रच सौलभ्याय सूत्रपातनिकादितत्तदाकृतिवृत्तानि कृत्वा तत्तदाकृत्यनुकूलरेखा-विन्यासादियथावद्विहितमस्ति । सर्वा अप्याकृतयः साधकानामाकलनाय सूत्रविशिष्टाः पूर्वं विन्यस्यानंतरं रेखामार्जनेन सिद्धाश्चेत्येवमुभय-विधा अप्याकृतयस्तत्तदुदाहरणसमकालं महता परिश्रमेण निर्माय योजिताः संति यासामालोचनेनाल्पाभ्यासा अपि कुंडमंडपादिविधातुं पारयेयुः । अयं ग्रंथः सव्याख्यः परमपूज्यैरस्मत्ताततचरणैर्जंडे इत्युपाह्वै रामचंद्रदीक्षितैर्निर्मित आसीत् । परंत्वयं नैःस्व्येन मुद्रणप्रका-शनाद्यसामर्थ्यात्कथमयमखिलवैदिकयाज्ञिकविद्वद्द्विजसरस्वतीकोशभवनमंडलमंडलीभूय सर्वोपकाराय भूयादिति विचिंत्य निर्णयसागरग्रं-थशोधनाधिकृतपणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनूजवासुदेवशर्मद्वारा पुनर्मुद्रणादिसर्वाधिकारैःसह मुंबापुरस्थ श्रीमत् तुकाराम जावजी-श्रेष्ठिभ्यः समर्पितः । सच तैः स्वीयनिर्णयसागराख्यमुद्रणशालायामानङ्क्य प्रकाशितो द्विजकुलादरणीयः स्यादित्याशास्ते ।

प्रार्थयतेच मुहुः सविनयं यदस्य मुद्रणारंभोत्तरमनव्यवहितकालमेवैतद्ग्रंथप्रणेतारः परमपूज्या अस्मत्पितृचरणाः कृत्स्नविश्वकलनव्या-पृतकालात्मेशपारवश्येनास्मन्ममतामुज्झित्य दिवमारुरुहुरित्यत्यंतदूयमानेनापि मयोर्वरितग्रंथस्य स्निग्धविद्वन्मित्रसाहाय्येन यथामति शोधितेऽप्यस्मिन्ग्रंथे यदि मतिमांद्यानवधानादिसंभूतोऽशुद्धिदोषोऽवशिष्टो दृष्टिसरणिमापतेत्तर्हि निसर्गदयालुभिर्विद्वद्धुरीणैः परिशोध्य ग्राह्य इति ।

श्रीकाशीक्षेत्रवासी जडेइत्युपाह्वयः
बाबुदीक्षितशर्मा ।

# कुंडरत्नावलीविषयानुक्रमः ।

श्रीगणेशाय नमः ॥ श्रीगुरुर्विजयतेतरां ॥ अविघ्नमस्तु ॥ पाशांकुशेषुकोदंडान्बिभ्रच्चारुचतुर्भुजैः । जपाकुसुमसंकाशं महः किंचिदुपास्महे ॥ १ ॥ ज्योतिर्वित्तमसां सूर्यं गणितामृतविग्रहं । दिवाकराब्जयो रूपं श्रीगौरीशंकरं नुमः ॥ २ ॥ महाजनिं गणेशाख्यं वंदे ज्योतिर्विदांवरं । यत्पादपंकजरजो बुधेभ्यो भूतिदं सदा ॥ ३ ॥ प्रारिप्सितस्य विघ्नविघातपूर्वकं समाप्तिमिच्छुः शिष्टाचरितं मंगलं वितनोति ॥ वंद इति ॥ देवं द्योतनशीलं वंदे इत्यन्वयः । ईशश्च ईश्वरी च तयोः कुमारं । अथवा ईशः शिवस्तस्येश्वरी नियंत्री त्रिपुरसुंदरीत्यर्थः । तस्याः कुमारं । अनंतकोटिब्रह्मांडसार्वभौमस्य श्रीकामे-

श्रीः ॥ वंदे मोदकपाणिं मोदकरं मोदकप्रियं देवं ।
ईशेश्वरीकुमारं लेखशिरोमुकुटरत्नशोभिपदं ॥ १ ॥

श्वरशिवस्य युवराजं महागणपतिमित्यर्थः । ललितोपाख्यानादौ तथैवोक्तत्वात् । तथाच । कुमारः स्याच्छुके स्कंदे युवराजे इति मेदिनी । लेखा देवास्तेषां मुकुटरत्नैः शोभि शोभायुक्तं पदकमलं यस्येत्यर्थः । लेखा अदितिनंदनाः इत्यमरः । मोदकः खाद्यविशेषः । मोदकः खाद्यभेदेऽस्त्रीति कोशात् । सः करे यस्य । मोदो हर्षः स्वभक्तानां हर्षं करोतीति मोदकः प्रियो यस्य । मोदकः हर्षुकः प्रियो यस्येति वा । अत्र सर्वविघ्नाटवीदवरूपश्रीगजाननवंदनत्वान्नमनात्मकं मंगलमिति ॥ १ ॥

अथ कुलदेवतां सप्तकोटीश्वराख्यं शिवं शार्दूलविक्रीडितेन स्तौति ॥ मौलाविति ॥ तत्प्रसिद्धं हालाहलाख्यं गरलं विषं। जयतीत्यर्थे नमस्कार आक्षिप्यते। शेषं सुगमं ॥ २ ॥ अथ स्वेष्टदेवतामनुष्टुभा नमति ॥ करुणेति ॥ करुणया कृपया आर्द्रौ पूरितौ कटाक्षौ अपांगदर्शने यस्याः। तरुणो य आदित्यस्तद्वत्सन्निभां आसमंतात्तेजोभिर्व्याप्तामित्यर्थः। बिंबवर्णवद-

मौलौ यस्य कलानिधेः किल कला शीर्षे च जह्नोः सुता कंठे तद्गरलं करेष्वहिधनुर्बा-
णत्रिशूलास्तथा। वामांके गिरिजा गजाननयुता दक्षे गुहो भैरवः पार्श्वे द्वीप्यजि-
नांबरः स जयति श्रीसप्तकोटीश्वरः ॥ २ ॥ करुणार्द्रकटाक्षां तां तरुणादित्यसन्निभां।
बिंबवर्णारुणां नौमि श्रीमत्त्रिपुरसुंदरीं ॥ ३ ॥ आर्यादुर्गां नौमि धर्मानिलेंद्रस्त्वैर्वैद्यानां
संततेः कौरवैश्च। युद्धे पंडोः शूरपुत्रान् समृद्धिदात्रीं ब्रह्मेंद्राग्निविष्णवीशवंद्यां ॥ ४ ॥

रुणा कान्तिर्यस्याः। बिंबं तु प्रतिबिंबे स्यान्मंडले पुंनपुंसकं। बिंबिकायाः फले क्लीबमिति मेदिनी। तां त्रिपुरसुंदरीं नौमि। नमस्कारं करोमीत्यर्थः ॥ ३ ॥ अथ कुलदेवतां शालिनीवृत्तेन नमति ॥ आर्यादुर्गामिति ॥ धर्मादीनां यमादीनां संततिः पांडवाः। समृद्धिदात्रीं युद्धे जयदात्रीं। शेषं स्पष्टं ॥ ४ ॥

पुनः शार्दूलविक्रीडितेन च स्तौति । शूलेत्यादि स्पष्टं ॥ ५ ॥ अथ गुरुमनुष्टुभा स्तौति ॥ भक्तेति ॥ भक्ताः शिष्या अस्मदादयस्तेषां नानाशास्त्राध्यापनेनाभीष्टं करोतीति । वेदशास्त्रेषु ये सिद्धांतास्तेषां पारगं । सर्वज्ञमिति यावत् । वंशीधरं एतन्नामविशिष्टं । परब्रह्ममहः गुरुरेव परं ब्रह्मेत्यादिवाक्यैर्गुरुरूपं तेजः किंचिदनिर्वचनीयं उपास्महे उपासनां कुर्म इत्यर्थः । अथ कृष्णपक्षे । भक्ताः पूजकास्तेषामभीष्टं वरदानादि । वेदशास्त्रसिद्धांतास्तेषां पारगं । यः सर्वज्ञः सर्वविदि-

शूलास्यब्जकरोटयश्च दधतीं दक्षादधस्तात्करैस्त्र्यक्षां पद्मगतां महाटविरतां स्वर्णो-
ज्ज्वलांगीं शुभां । शीर्षोद्यच्छुजगादपिच्छमुकुटां पंडोः सुतान्कौरवान्त्रायंतीं भजतामशेषसु-
खदामार्याख्यदुर्गां नुमः ॥ ५ ॥ भक्ताभीष्टकरं वेदशास्त्रसिद्धांतपारगं । परब्रह्ममहः
किंचिद्वंशीधरमुपास्महे ॥६॥ कृष्णाख्यतातपदपद्मयुगं च नत्वा ध्यात्वा गुरोर्हृदि मुदा
पदपद्मयुग्मं । ज्ञात्वा च पूर्वविदुषां सुकृतीः समस्ता वक्ष्येऽत्र कुंडकरणं सह मंडपेन ॥७॥

त्युक्तत्वात् । शेषं सुगमं ॥ ६ ॥ एवं मंगलानि विधाय पितृवंदनपूर्वकं स्वकरणीयं वसंततिलकया प्रतिजानीते ॥ कृष्णेति ॥ कृष्णेत्याख्या यस्य तत्पदयुगमेव पद्मयुगं नत्वा प्रणम्य तथा गुरोरपि पदपद्मयुग्मं मुदा हर्षेण हृदि ध्यात्वा पूर्वाचार्याणां सुकृतीः कुंडनिबंधान् ज्ञात्वा मनस्यवधार्य कुंडानां एककुंड्यादिनवकुंड्यंतानां तथा ग्रहकुंडानां

द्विमुखदशमुखशतमुखादीनां तथा प्रसंगाच्छ्रीधर्यादिवेदीनां ग्रहपीठानां च करणं करणप्रकारं मंडपेन त्रिहस्तादिशतहस्तांतेन सह वक्ष्ये वक्ष्यामीत्यर्थः। नन्वत्र संबंधचतुष्टयाभावात्कथं प्रेक्षावत्प्रवृत्तिरिति चेन्न। कुंडमित्यादिना विषयः। करणं प्रयोजनं। तद्वक्ष्ये इति संबंधः। एतज्जिज्ञासुरधिकारीत्यतो नाप्रवृत्तिरिति ॥ ७ ॥ अथ वक्ष्यमाणोपयोगिनीं परिभाषामनुष्टुप्चतुष्टयेनाह ॥ पादेति ॥ पादस्याग्रे तिष्ठतीति सचासौ उद्बाहुरूर्ध्वौ बाहू यस्य कर्तुर्यजमानस्य शरलवः पंचमो भागः करो हस्त इत्यर्थः। इषवः पंचेत्यादिसंज्ञा लोकप्रसिद्धा ज्ञेयाः। तस्य हस्तस्य सि-

पादाग्रतिष्ठदुद्बाहोः कर्तुः शरलवः करः। तत्सिद्धांशोऽगुलं तस्य गजांशो यव उच्यते ॥ ८ ॥
यूका तस्याष्टमस्तस्या लिक्षा नागांशको मता। कंठादौ चतुरस्रस्य जिनांशोऽगुलमिष्यते ॥९॥

द्धांशश्चतुर्विंशतितमो भागोऽगुलं। तस्य गजांशोऽष्टमांशो यव उच्यते। प्राचीनैरिति शेषः ॥ ८ ॥ यूकेति ॥ तस्य यवस्याष्टमोऽष्टमांशो यूका। तस्या नागांशोऽष्टमांशो लिक्षेत्यादिः। एवमुत्तरोत्तरा अपि वालाग्रादिसंज्ञाः संति ता अनुपयुक्ता अतो नोक्ताः। तथाचादित्यपुराणे। वालाग्रमष्टलिक्षा तु यूका लिक्षाष्टकं मतं। अष्टौ यूका यवं प्राहुरंगुलं तु यवाष्टकमिति। तथा चतुर्विंशत्यंगुलको हस्त इत्याद्यन्यत्र। कंठादौ आदिपदेन योनिनाभिमेखलानां संग्रहः। चतुरस्रस्य एकहस्तादिचतुरस्रकुंडस्य चतुर्विंशांशः अंगुलं। मंडपादौ त्वादिपदेन ध्वजपताकास्तंभादीनां संग्रहः। तत्र हस्तस्यैव जिनांशों-

ऽगुलं तदेवागुलमंश इत्यपि कथ्यते । अंशो भागो लवोंऽगुलमिति च पर्यायाः । एवं द्विहस्तकुंडादौ कुंडचतुर्विंशांशोंऽ-गुलमित्यादि ज्ञेयं । उक्तंच कामिके । कुंडानां यश्चतुर्विंशो भागः सोंऽगुलसंज्ञकः । विभज्यानेन कर्तव्या मेखला कंठना-भय इति । सिद्धांतशेखरेऽपि । चतुर्विंशतिमो भागः कुंडानामंगुलं स्मृतमिति ॥ ९॥ कुंडादाविति ॥ कुंडानामादिपदेन पीठादौ च यद्वृत्तकरणं तस्मिन् । वृत्तं वृतिर्गोलं वलयमित्यनर्थांतरं । व्यासः व्यासार्धं ग्राह्यं । व्यासो विस्तृतिर्विस्तार-स्ततिरिति च पर्यायाः । सतु सर्वकुंडव्यासकथनावसरे वक्ष्यमाणः ॥ १० ॥ दिगिति ॥ दिक्साधने प्राच्यादिदिक्साध-

मंडपादौ तु हस्तस्य तदेवांशोऽपि कथ्यते । कुंडादौ वृत्तकरणे व्यासो व्यासार्धमिष्यते ॥१०॥
दिक्साधने च यश्शंकुस्तच्छंकोर्द्विगुणा स्तृतिः। अनुक्तौ मध्यतो वृत्तमित्येतत्पारिभाषिकं ॥११॥

नार्थे यः शंकुस्तच्छंकोर्मानात् द्विगुणा स्तृतिर्दिक्साधनवृत्तव्यासः स्यात् । यत्र कुत्रचिद्वृत्तं कार्यमित्यत्र कस्मात्कार्यमित्य-पेक्षायाः सत्वान्मध्यतः मंडपकोष्ठमध्यतः मंडपे यस्मिन्कोष्ठे कुंडं विवक्षितं तस्य मध्यतः कोष्ठमध्य एव कुंडमध्य इति कुंडोद्योतादावुक्तत्वात्तस्मात्कार्यमित्यर्थः । अत्र शंकुमानाद्वृत्तमानं गणितविपरीतं तद्वचनबलात्स्वल्पांतरत्वाल्लाघवाच्चो-ज्ञेयं । तथाच कात्यायनशुल्बे।समे शंकुं निखाय शंकुसंमितया रज्ज्वा मंडलं परिलिख्य यत्र रेखयोः शंक्वग्रच्छाया निपतति तत्र शंकुं निहंति सा प्राचीति । परशुरामोपि । प्रमाणमंगुलस्योक्तं शंकुः स्याद्द्वादशांगुलः । एकांगुलप्रमाणं तु शंकुं भुवि

विनिक्षिपेत् । रज्ज्वा तन्मितया वृत्तं कृत्वास्मिंश्छंकुभा यतः । शंकुद्वयं पुनर्देयं प्राह्णापराह्णकालिकं । तयोरुपरिसूच्यस्था प्राची ज्ञेया सपश्चिमेति ॥ ११ ॥ अथ वक्ष्यमाणोपयोगि भूशुद्धिपूर्वकदिक्साधनं स्रग्धरयाह ॥ देश इति ॥ प्राक्पूर्वं संभाविते कल्पिते देशे विधिवदित्यनेन दहनखननसंप्लावनादिभिर्भूमिं समां विधाय कृत्वा अथानंतरं विधिवदित्यनुवर्तते तेन भूमिं वराहानंतकूर्मादींश्च संपूज्य । अत्रैव भूम्यां मध्ये विरचितं कृतं यद्वलयं तस्मिन्साग्रशंकुं अग्रेण सहितं शंकुं रोपयेद्दृढं स्थापयेत् । तस्य शंकोः छायाग्रं वलये वृत्ते यस्मिन्देशे विशति प्रवेशं करोति । तथा यस्माद्देशाद्याति निर्गच्छति

देशे संभाविते प्राग्विधिवदिह समां संविधायाथ भूमिं संपूज्यात्रैव मध्ये विर-
चितवलये रोपयेत्साग्रशंकुं । तच्छायाग्रं च यस्मिन्विशति च वलये याति
यस्माच्च देशात्तौ प्रत्यक्पूर्वदेशौ तदनुगतगुणः प्राग्गुणोऽसौ प्रदिष्टः ॥ १२ ॥

तौ देशौ प्रत्यक्पूर्वदेशौ स्तः । तद्देशानुगतगुणो योऽसौ प्राग्गुणः कथित इत्यर्थः । शारदातिलके । नक्षत्रराशिवाराणामनुकूले शुभेऽहनि । ततो भूमितले शुद्धे तुषारांगारवर्जिते । पुण्याहं वाचयित्वा तु मंडपं रचयेच्छुभमिति । भूम्यादिपूजा मात्स्ये । वराहं कूर्मशेषौ च क्षितिं चैव विधानतः । पूजयेद्वास्तुकार्येषु विधिना साधकोत्तम इति । शंकुलक्षणं वाजपेय्यां । सूच्यग्रः सरलः शंकुः पृथुर्मूले घृतः स्थिरः । अधोपि वा सूक्ष्ममुखो निहितः प्रविशेद्भुवीति ॥ १२ ॥

एवं प्राचीं प्रतीचीं च संसाध्य दक्षिणोदक्साधनं विदिक्साधनं च शालिन्याह ॥ तस्येति ॥ तस्य सूत्रस्य प्राग्गुणस्य यौ अंतौ पूर्वपश्चिमचिह्ने ताभ्यां सकाशाद्वृत्तपार्श्वतः द्वौ तिमी मत्स्यौ कार्यौ पूर्वचिह्ने कर्कटस्य सूत्रस्य वा एकं प्रांतं निधायापरप्रांतेन द्वितीयांकाद्धनुरुत्पाद्यैवं पश्चिमचिह्ने प्रांतं निधाय पूर्वचिह्नाद्धनुरुत्पादयेत्। तयोर्यौ संपातौ तावेव लोके मत्स्यसंज्ञौ। तयोर्वक्राद्यत्सूत्रं केंद्रलग्नं वृत्तमध्यः केंद्रसंज्ञः तेन सूत्रेण याम्यसौम्यौ दक्षिणोदग्दिशौ स्फुटौ प्रकटीभूतौ स्यातां। तथा सूत्रद्वंद्वं प्राग्गु-




तस्यांताभ्यां द्वौ तिमी पार्श्वतोऽत्र तद्वक्राद्यत्सूत्रकं
केंद्रलग्नं। तेन स्यातां याम्यसौम्यौ स्फुटौ स्युः सूत्र-
द्वंद्वाग्रात्तु मत्स्यैर्विकाष्ठाः ॥ १३ ॥ वृत्ते चिह्नान्यष्टदिक्षु
स्युरष्टौ तेषु प्राचीपश्चिमे वक्रपुच्छे।वक्राद्दक्षा दोःशिरः-
पार्श्वकट्यः पुच्छाद्वामाः श्रोणिपार्श्वांसकाश्च ॥ १४ ॥




णोदग्गुणरूपं तयोरग्रान्मत्स्यानुत्पाद्य तैर्मत्स्यैः पूर्वोक्तवद्विकाष्ठाः विदिशः स्फुटाः स्युरित्यर्थः ॥१३॥ अथ वृत्ताष्टधाकरणं तच्चिह्नसंज्ञाश्च शालिन्याह ॥ वृत्तइति ॥ वृत्ते कृते तस्मिन्नष्टसु दिक्षु अष्टौ चिह्नानि कुर्यात्। तेष्वष्टसु चिह्नेषु ये प्राची-पश्चिमचिह्ने ते वक्रपुच्छे स्तः। प्राच्यां वक्रं पश्चिमायां पुच्छमित्यर्थः। ततो वक्राद्दक्षिणाः प्रादक्षिण्येन प्रथमं दोःशिरः

भुजसंज्ञं। ततो दक्षिणपार्श्वस्ततो दक्षिणश्रोणिः। ततः पुच्छात्प्रादक्षिण्येन वामाः वामश्रोणिः वामपार्श्वः वामोंऽसो भुजश्चे-त्यष्ट चिह्नसंज्ञाः तेन प्राच्यादीनां वक्रादिसंज्ञांतराणीति फलितं । स्कंधो भुजशिरोंऽसोऽस्त्रीत्यमरः ॥ १४ ॥ अथ व-क्ष्यमाणप्राकृतनवकुंडानां वृत्तव्यासान् इंद्रवज्रावसंततिलकोपगीतिभिराह ॥ स्यादिति ॥ अत्रांकलेखनमेव व्याख्या ।

स्यात्पंचयूकायवसप्तसंयुतैर्व्यासोंऽगुलीभिर्गुणवह्निभि २३।७।५ र्बुधैः । प्रोक्तो-ऽब्धिकोणे हवने सहस्रके योनौ खरामैर्यवयुग्म ३०।२ केन ॥ १५ ॥ यूका-त्रिकेणसहितैर्यवयुग्मकेन नागाग्निभिश्च ३८।२।३ स भवेदिह चार्धचंद्रे । त्र्यस्रे तु विद्धि सयवेन यमाब्धिभिश्चा ४२।१ न्ये सार्धषट्कदहनै ३६।४ स्त्रिभुजेऽथ वृत्ते ॥ १६ ॥ षड्यूकासहभै २७।०।६ रथ षड्यवसहगोयमैः २९।६ षडस्रेऽब्जे । त्रियवयुतभूमिरामै ३१।३ रथ वस्वस्रे च सार्धगजनेत्रैः २८।४ ॥ १७ ॥



अथ चतुरस्रव्यासः २३।७।४ योनेः ३०।२ अर्धचंद्रस्य ३८।२।३ त्र्यस्रस्य ४२।१ अन्यत्र्यस्रस्य ३६।४ वृत्तस्य २७।०।६ षडस्रस्य २९।६ पद्मस्य ३१।३ अष्टास्रस्य २८।४ इति नवकुंडीवृत्तव्यासाः ॥ १५ ॥ १६ ॥ १७ ॥

अथग्रहपीठाकारकुंडवृत्तव्यासान्भुजंगप्रयातोपेंद्रवज्राभ्यामाह ॥ग्रहाणामिति ॥ अत्र सूर्यशशिभौमानां वृत्तचतुरस्रत्र्यस्रकुं-
डानि तेषां व्यासाःपूर्वमेव तत्तद्वृत्तव्यासकथनावसरे उक्ता अतःपुनर्नोक्ता इति । पंचास्रिवृत्तव्यासस्तूत्कलिककुंडवृत्तव्यासकथ-
नावसरे वक्ष्यमाणत्वादत्र नोक्त इति । अथ राहोः शूर्पाकारकुंडस्य ३८।३।२ द्वितीयशूर्पाकारस्य ३९।०।६ शनेर्धनुराकारकुंडस्य
२९।२।४केतोर्ध्वजाकारकुंडस्य ५८।१।४गुरोर्बृहस्पतेर्दीर्घचतुरस्रस्य ३६।३।७ बुधस्य ध्वजाकारकुंडस्य ५८।७ इति ग्रहपीठाका-

ग्रहाणां मखे खेटपीठाभकुंडेऽगयूकोनसार्धाष्टरामै ३८।३।२ स्तु चाद्ये । अथ स्याद्द्वितीयेंऽगयूकायुतैश्च
नवोषर्बुधैः ३९।०।६ शूर्पकुंडेऽथ चापे ॥ १८ ॥ सवेदयूकाद्द्वियवांकयुग्मैः २९।२।४ सवेदयूकैकयवा-
ष्टबाणैः ५८।१।४ ॥ ध्वजेऽथ सार्धर्तुगुणैर्वियूकै ३६।३।७ र्गुरोर्नवाक्षैर्वियवैः ५८।७ शराभे ॥१९॥ उत्क-
लिकानां व्यासाः शरास्रकादिमगजास्रकांतानां । अंतर्बहिर्वृतीनां वक्ष्यंतेऽमी क्रमात्सम्यक् ॥२०॥

रकुंडवृत्तव्यासाः ॥१८॥१९॥ अथोत्कलिकानामनुक्तसमभुजकानां च व्यासानार्येंद्रवज्राभुजंगप्रयातैराह ॥ उत्कलिकेति ॥
उत्कलिकानामुत्फुल्लकलिकेव यानि तेषां शरास्रकं पंचास्रमादिर्येषां । तथा गजास्रकमष्टास्रमंते येषां । पंचषट्सप्ताष्टास्राणा-
मित्यर्थः । अंतर्बहिर्या वृतयः वृत्तानि तेषां व्यासाः क्रमात्सम्यग्वक्ष्यंते । पंचास्रांतर्वृत्तस्य २० बहिर्वृत्तस्य २९।२ षडस्रां-

तर्वृत्तस्य २० बहिर्वृत्तस्य ३८।३।२ सप्तास्रांतर्वृत्तस्य २० बहिर्वृत्तस्य ३६ अष्टास्रांतर्वृत्तस्य २० बहिर्वृत्तस्य ३८ तथा सम-पंचास्रे समसप्तास्रे चेत्यर्थः । समभुजपंचास्रस्य ३११ समभुजसप्तास्रस्य २९ इति कुंडवृत्तव्यासाः ॥ २० ॥ अथ सूर्यादीनां पीठवृत्तव्यासानयनप्रकारमिंद्रवज्रयाह ॥ व्यासस्येति ॥ व्यासस्य ग्रहकुंडवृत्तव्यासस्य वर्गः वक्ष्यमाणग्रहकुंडक्रमेण

अंतःस्थवृत्तेषु नखो २० न्मितोसौ बाह्यस्थवृत्तेषु तु पंचकोणे। अंकाग्निभिः स्या ३९।२ द्वियवैर्धितैश्च
विबाणयूकैः सदलाष्टरामैः ३८।३।२ ॥२१॥ षडस्रे तथा षट्गुणैः ३६ सप्तकोणे वस्वग्निभि ३८
श्चैव तथाष्टकोणे । समे बाणकोणे यवाढ्यैः कुरामै ३११ स्तथैवांकपक्षै २९ रगास्रे समे
स्यात् ॥ २२ ॥ व्यासस्य वर्गाद्रवि १२ गो ९ जिना २४ ब्धि ४ तत्वां २५ ग ६ नागां ८ ग
६ युगै ४ र्विनिघ्नात् । पीठस्तृतिः स्यात्फलभक्तमूलं वेद्या जिनां २४ शोंऽगुलमत्र चेष्टं ॥ २३ ॥

रव्याद्यंकैर्विनिघ्नः गुणितः फलभक्तः फलं षट्सप्तत्युत्तरपंचशतं एकहस्तसर्वकुंडानां प्रसिद्धं तेन भक्तः तस्मान्मूलं तदेव पीठस्तृतिः व्यासः स्यादित्यर्थः। अत्र पीठव्यासादिषु ग्रहवेद्याश्चतुर्विंशांशोंऽगुलमिष्टं स्यादित्यर्थः । पीठानि देहलब्धांगुलैर्न स्युरिति किंतु ग्रहवेद्याश्चतुर्हस्तैकहस्तादेश्चतुर्विंशांशोंगुलं परिकल्प्य तदंगुलैः कार्याणीति भावः ॥ २१ ॥ २२ ॥ २३ ॥

अत्रोदाहरणं यथा ॥ सूर्यकुंडव्यासः २७।०।६ अस्य वर्गः ७३४।०।४ अयं रविनिघ्नः ८८०८।६ फलेनानेन ५७६ भक्तो लब्धः सूर्यपीठवृत्तव्यासवर्गः १५।२।३ अस्य मूलं ३।७।२।३ इदमेव सूर्यपीठव्यासः ॥ ॥ अथ शुक्रस्य । तत्र तत्कुंडांत-वृत्तव्यासः २० अस्य वर्गः ४०० अयं नवगुणः ३६०० फलभक्तः ६।२ अस्य मूलं २।४।२।५ इदमेव शुक्रपीठांतर्वृत्त-व्यासः ॥ ॥ अथ शुक्रकुंडवहिर्वृत्तव्यासः ३९।२ अस्य वर्गः १५४०।४।४ अयं नवगुणः १३८६५।०।४ फलभक्तः २४।०।४।४ अस्य मूलं ४।७।२ इदमेव शुक्रपीठवहिर्वृत्तव्यासः ॥ ॥ अथ समपंचास्रशुक्रकुंडवृत्तव्यासः ३१।१ अस्य वर्गः ९६८।६।१ अयं नवगुणः ८७१८।७।१ फलभक्तः १५।१।०।६ अस्य मूलं ३।७।१।०।६ इदमेव समपंचास्रशुक्रपीठवृत्तव्यासः ॥ ॥ अथ चंद्रपीठवृत्तव्यासः ३३।७५ अस्य वर्गः ११५२।६।४। अयं चतुर्विंशत्या गुणितः २७६६७।४ फलभक्तः ४८।०।२।१ अस्य मूलं ६।७।३।४ इदमेव चंद्रपीठवृत्तव्यासः ॥ ॥ अथ भौमपीठवृत्तव्यासः ४२।१ अस्य वर्गः १७७४।४।१ अयं चतुर्गुणः ७०९८।०।४ फलभक्तः १२।२।४।५ अस्य मूलं ३।४।२।५ इदमेव भौमपीठवृत्तव्यासः ॥ अयमेवान्यत्र्यस्रस्याद्यवृत्तव्यासोऽपि ॥ अथ द्वितीयत्र्यस्रस्यवृत्तव्यासः ३६।४ अस्य वर्गः १३३२।२ चतुर्गुणः ५३२९ फलभक्तः ९।२ अस्य मूलं ३।१।२ जातोऽयमन्यत्रयस्राकारपीठवृत्तव्यासः ॥ अथ राहुपीठवृत्तव्यासः । तत्र तत्कुं-डवृत्तव्यासः ३८।३।२ अस्य वर्गः १४७५।०।२ पंचविंशत्या गुणितः ३६८७५।६।२ फलभक्तः ६४।०।१ अस्य मूलं ८ इदमेव राहुपीठवृत्तव्यासः॥ ॥ अथ द्वितीयशूर्पकुंडवृत्तव्यासः ३९।०।६ अस्य वर्गः १५२८।२।४।४ पंचविंशतिगुणः ३८२०८

फलभक्तः ६६।२५।२ मूलं ८।१।४ इदमेव द्वितीयशूर्पकुंडवृत्तव्यासः ॥ ॥ अथ शनिपीठवृत्तव्यासः । तत्र तत्कुंडवृत्तव्यासः २९।२।४ अस्य वर्गः ८५९।१।६ षड्गुणितः ५१५५।२।४ फलभक्तः ८।७।४।६।४ अस्य मूलं २।७।७।३।६ इदमेव शनिपीठवृत्तव्यासः ॥ ॥ अथ केतुपीठवृत्तव्यासः । तत्र तत्कुंडवृत्तव्यासः ५८।१।४ अस्य वर्गः ३३८५।६।२ अष्टगुणः २७०८६।२ फलभक्तः ४७।०।१।५ अस्य मूलं ६।६।७ इदमेव केतुपीठवृत्तव्यासः ॥ ॥ अथ गुरुपीठवृत्तव्यासः । तत्र तत्कुंडवृत्तव्यासः ३६।२।२ अस्य वर्गः १३१६।२।५ षड्गुणितः ७८९७।७।६ फलभक्तः १३।५।५।४ अस्य मूलं ३।५।५।४

जिना २४ कृति २२ नखै २० र्धृति १८ क्षितिपतीं १६ द्र १४ तुल्यैस्तथा
दिनेश १२ हरि १० दृष्टभिः ८ प्रवरमध्यमाल्पाः करैः । अमी गदितमंडपा-
स्तदवनेः करेणोच्चता तदर्धमथवा कुरु त्वमिह नंद ९ खंडानि वै ॥ २४ ॥

इदमेव गुरुपीठवृत्तव्यासः ॥ ॥ अथ बुधपीठवृत्तव्यासः । तत्र तत्कुंडवृत्तव्यासः ५८।७ अस्य वर्गः ३४६६।२।१ चतुर्गुणितः १३८६५।०।४ फलभक्तः २४।०।४।४।४ अस्य मूलं ४।७।२।०।३।५ इदमेव बुधपीठवृत्तव्यासः ॥ इति सूर्यादीनां पीठवृत्तव्यासानयनप्रकारः ॥ ७ ॥ ७ ॥ अथ वक्ष्यमाणकुंडानांस्थलसापेक्षत्वादादौ मंडपविस्तारं भूमेरुच्चतां च पृथ्वीवृत्तेनाह ॥ जिनेति ॥ जिनाश्चतुर्विंशतिः २४ आकृतिर्द्वाविंशतिः २२ नखानि विंशतिः २० एतद्धस्तैस्तथा धृतिक्षितिपतींद्रतुल्यैः अष्टादश १८ षोडश १६ चतुर्दशभिः १४ करैः तथा द्वादश १२ दश १० दृ ८ हस्तैश्च श्रेष्ठमध्यमकनिष्ठा

मंडपास्तेषामवनेर्भूमेः उच्चता करेण हस्तेन स्यादथवा तदर्धं करार्धं उच्चता स्यात् । अत्र मंडपे नवानि खंडानि कुरु । मंडपं समनवभागं कुर्वित्यर्थः । भो इति संबुद्धिः । रुद्रप्रसादे । पूर्णहस्ताश्चतुर्द्वाराश्चाष्टहस्तादितः क्रमात् । चतुर्विंशतिहस्तांता हीनमध्योत्तमाः क्रमादिति । कपिलपंचरात्रे मंडपं प्रकृत्य । उच्छ्रायो हस्तमानं स्यात्सुसमं च सुशोभनमिति । सिद्धांतशेखरे । स्थलादर्कांगुलोच्छ्रायं मंडपस्थलमीरितमिति ॥ २४ ॥ अथ वर्णपरत्वेन मंडपान्छा- लिन्याह ॥ नखेति ॥ विंशतिषोडशद्वादशाष्टहस्तैर्यथाक्रमेण ब्राह्मणक्षत्रविट्शूद्राणां हीनवर्णानां च मंडपाः स्युरिति

नख २० नृप १६ रवि १२ काष्ठा १० नाग ८ हस्तैः क्रमेण द्विजनृपति-
विशां वै ह्यंघ्रिभूहीनयोश्च । अथ च हरि १० दिनै १२ र्वा सूर्य १२ शक्रै-
१४ स्तथा वा नृपति १६ धृति १८ करैर्वा स्वल्पमध्योत्तमास्ते ॥ २५ ॥

शेषः । अथानंतरं दशद्वादशहस्तैः स्वल्पः हीनः, द्वादशचतुर्दशहस्तैर्मध्यमः, षोडशाष्टादशहस्तैरुत्तम इत्यर्थः । तदुक्तं विश्वकर्मणा । विप्राणां मंडपः कार्यो हस्तैर्विंशतिसंमितैः । राज्ञां षोडशभिर्हस्तैर्हस्तैर्द्वादशभिर्विशां । शूद्राणां दशभिर्हस्तै- रष्टाभिर्हीनवर्णिनामिति । पंचरात्रे । दशद्वादशहस्तास्तु स्वल्पाः प्रोक्ता मनीषिभिः । रवींद्रहस्ता मध्याः स्युः सर्वकर्मसु शोभनाः । तथा षोडशभिर्हस्तैर्मंडपः स्यादिहोत्तम इति । मंत्रमुक्तावल्यामपि । उत्तमं मानमित्याहुर्हस्तषोडशकं पुनरिति । तथा । श्रेष्ठाः प्रोक्ताः कलाहस्ता धृतिहस्ताश्च मंडपा इति ॥ २५ ॥

अथ तुलादाने मंडपमानमनुष्टुभाह ॥ तुलेति ॥ तुलादाने कर्तव्ये विंशतिहस्तैर्वाष्टादशहस्तैः षोडशहस्तैः स मंडपः स्यादिति । यदि चेदपरो मंडपः स्यात्तदा पूर्वमंडपतुल्यमंतरं त्यक्त्वा भवेदित्यर्थः । लिंगपुराणे तुलादानप्रकरणे । विंशद्धस्तप्रमाणेन मंडपं कूटमेव वा । तथाष्टादशहस्तेन कलाहस्तेन वा पुनरिति । वास्तुशास्त्रे । मंडपांतरमुत्सृज्य कर्तव्यं मंडपांतरमिति ॥ २६ ॥ अथ गेहादौ मंडपकरणे विशेषं शार्दूलविक्रीडितेनाह ॥ गेह इति ॥ यदि गेहे मंडपः स्यात्तदा गेहसममथवा गेहपंचगुणमंतरं त्यक्त्वा तं मंडपं रचयेत् । प्रासादेऽपि तत्समं प्रासादसमं विवरमंतरं त्यक्त्वा तं रचयेत् । अल्पदेशे संकीर्णदेशे

तुलादाने नखै२० र्वापि धृतिभि १८ र्वा नृपै १६ श्च सः । यदि चेदपरोऽपि स्यात्पू-
र्वतुल्यांतरे भवेत् ॥ २६ ॥ गेहे वा यदि मंडपो गृहसमं पंचघ्नमत्रांतरं प्रासादे-
ऽपि च तत्समं हि विवरं त्यक्त्वाल्पदेशे तयोः । संश्लिष्टं युग्मलं जलाशय-
विधौ सोपानतो दिक्करे शक्रेशांबुपसोमदिक्षु रचयेदन्यत्र तं वेश्वरे ॥ २७ ॥

यदि तयोर्युगुलं तदा संश्लिष्टं संलग्नं रचयेत् । अपिच जलाशयविधौ जलाशयोत्सर्गविधौ सोपानतो दशकरे पूर्वेशानपश्चिमोत्तरदिक्षु वा रचयेत् । अन्यत्र गृहप्रासादादिषु ईश्वरे ईशान्यां वा रचयेदित्यर्थः । वेति विकल्पेन पूर्वोत्तरे वेति । तदुक्तं सिद्धांतशेखरे । हर्म्याग्रे मंडपं कुर्यात्त्यक्त्वा हर्म्यसमां क्षितिं । हर्म्यात्पंचगुणं वापि सोपानाद्दशहस्तकानिति । सोपानादिति तु तडागादिप्रतिष्ठाविषयमिति कल्पलता । रुद्रयामले । गृहे देवालये वापि संकीर्णे यत्र दृश्यते । तत्र कार्यं मंडपज्ञैः

संश्लिष्टं मंडपद्वयमिति । हयशीर्षपंचरात्रे । वापीकूपतडागानां पश्चिमे यागमंडपमिति । अपराजितपृच्छायां । तडागाग्रेऽथ वैशाने उत्तरे यागमंडपमिति । मात्स्ये । गृहस्योत्तरपूर्वेण मंडपं कारयेद्बुध इति ॥ २७ ॥ अथ प्रकारांतरेण कनिष्ठादिकत्वं स्वल्पकृत्ये मंडपमानं च शिखरिण्याह ॥ कनिष्ठेति ॥ द्वादशहस्तादारभ्य हस्तयुग्मैः क्रमेण प्रवृद्धा अष्टाविंशतिकरास्ते कनिष्ठाद्याः मंडपा रुचिराः स्युरित्यर्थः । तत्र द्वादशचतुर्दशषोडशहस्ताः कनिष्ठाः । अष्टादशविंशतिद्वाविंशतिकराः मध्यमाः । चतुर्विंशतिषड्विंशत्यष्टाविंशतिहस्ता उत्तमा इति ज्ञेयं । अथवा कनिष्ठकृत्ये स्वल्पहोमे शांत्यादौ एककुंडपक्षे वा

कनिष्ठाद्यास्ते वा रवि १२ करमिताद्धस्तयुगुलैः २ प्रवृद्धा द्यानागद्वय २८ मितक-
रास्ते च रुचिराः । कनीयान्कृत्ये स्युस्त्र्यु ३ दधि ४ शर ५ तर्का ६ चल ७ गजा ८
र्क १२ विश्व १३ क्ष्माभृद्भिः १६ क्वचिदिह मता वापि च करैः ॥ २८ ॥

त्रिभिश्चतुर्भिः पंचभिः षड्भिः सप्तभिरष्टाभिर्द्वादशभिस्त्रयोदशभिः षोडशभिर्हस्तैः क्वचित्ते वा मताः स्युरित्यर्थः । अत्रापि सप्तहस्तांताः कनिष्ठाः, अष्टद्वादशत्रयोदशहस्ता मध्यमाः, षोडशहस्ताद्या उत्तमा इति ज्ञेयं । प्रतिष्ठासारसंग्रहे । स्वल्पो द्वादशहस्तोऽयं द्विद्विवृद्ध्या ततः क्रमात् इति । रुद्रप्रसादे । यद्वा द्वादशहस्ताद्या द्विहस्तवृद्धितो नव । अष्टाविंशतिहस्तांताः कैश्चिदुक्ता मनीषिभिरिति । वसिष्ठसंहितायां मूलशांतिमभिधाय । ईशान्यामथ वा प्राच्यामुदीच्यामथ कल्पयेत् । मंडपं चाष्टभिर्हस्तैश्चतुर्भिर्वा समंतत इति । तथा तत्रैव । षड्द्वादशाष्टभिर्हस्तैः षोडशैर्वापि संमितमिति । कल्पलतायामपरा-

जितपृच्छायां । त्रिपंचसप्तहस्तं वा नवैकादशभिस्तथा । त्रयोदशकरं वापि द्विरष्टौ वा तथोत्तममिति ॥ २८ ॥ अथ मंडपविशेषान्नव नंदिन्याह ॥ अथेति ॥ अथवा त्रिंशद्धस्तैरुत्तमः । विंशतिहस्तैर्मध्यमः । दशहस्तैः कनिष्ठ इति । अथवा मखस्य यागस्य पूर्तिंकृत् समाप्तिकृद्यैर्हस्तैर्भवति तैर्हस्तैर्मंडपः स्यादिति । अथवा य उक्ता मंडपास्ते सर्वे सर्ववर्णानां यथासंभवं स्युः । ते सर्वेऽपि मंडपाः समकोणाः समभुजैश्च युताश्चतुष्कोणा भवंतीत्यर्थः । सिद्धांतशेखरे । त्रिषूत्तमेषु चैवोक्तस्त्रिंशद्धस्तप्रमाणतः । विंशत्या मध्यमेषूक्तस्त्वन्येषु दशभिः करैरिति । तथा तत्रैव । कामतो मंडपो वा स्यादितं मंडपविस्तृतिरिति । कात्यायनोऽप्यर्थात्परिमाणमिति । विश्वकर्मा । सर्वे वा सर्ववर्णानां कार्याः कार्यानुसारत इति । अ-

अथवाऽथ्रराम ३० नख २० दिङ्मित १० हस्तैर्मखपूर्तिकृद्भवति यैरपि तैर्वा ।
सकलाश्च वा सकलवर्णजनानां समकोणबाहुयुतसागरकोणाः ॥ २९ ॥

पराजितपृच्छायां । चतुरस्रं समं शुद्धं भुजकर्णविशोधितमिति मंडपप्रकरणे उक्तं । तथा सिद्धांतशेखरे । चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितमिति । गौतमीयतंत्रेऽपि । चतुर्द्वारसमायुक्तं चतुरस्रं समंतत इति । सच मंडप आयामविस्ताराभ्यां चतुरस्र उक्त इति कल्पलता । अथैतेषां श्रेष्ठादित्रैविध्यमुक्तं मंत्रमुक्तावल्यां । अथ मंडपनिर्माणं ब्रह्माण्डे ब्रह्मणोदितं । श्रेष्ठमध्यमहीनैस्तु मानैस्तच्च त्रिधा मतमिति । पंचरात्रेऽपि । मंडपाः कर्मसु प्रोक्ता अल्पा मध्यास्तथोत्तमाः । यथादेशं यथाकालं प्रयोज्यास्ते विचक्षणैरिति । तेषां व्यवस्था हयशीर्षपंचरात्रे । हीनस्तु मंडपः कार्यो हीने चायतने सदा । उत्तमे

तूत्तमः कार्यो मध्यमे मध्यमस्तथा । पंचरात्रेऽपि । अथवाल्पेषु मध्याः स्युर्मध्येष्वल्पा भवंति हि । उत्तमेषूत्तमाः कार्या मध्यमा वा विचक्षणैः । अधमेषूत्तमाः कार्या मंडपास्तत्त्ववेदिभिरिति ॥ २९ ॥ एवं प्रतिष्ठादिकर्मसु मंडपानुक्त्वा ग्रहाणां कोटिहोमादौ तानुपजातिकयाह ॥ कोट्याहुताविति ॥ कोटिहोमे कर्तव्ये यथासंख्यं शतकुंडपक्षे शतहस्तैः दशकुंडपक्षे पंचाशत्करैर्द्विकुंडपक्षे पंचविंशतिकरैः । आद्ये शतमुखे एवोक्तास्त्रयो मंडपाः अपि श्रेष्ठादिकाः श्रेष्ठमध्यमाधमा वा स्युरित्यर्थः । तदुक्तमपराजितपृच्छायां । शुभे काले प्रकुर्वीत मंडपं च शतानने । पंक्त्येधितैः शतकरैर्मापयित्वा समंततः ।

कोट्याहुतौ स्युः शतवक्त्रपक्षे दशास्यपक्षे द्विमुखेऽपि वा स्युः । खव्योमचंद्रैः १०० खशरै ५० श्च तत्वै २५ राद्ये त्रयो वापि वरादिकास्ते ॥ ३० ॥ अथ प्रधानादपि यत्र पूर्वं ग्रहाधिवासश्च तदा प्रधानं । ईशानदेशे च ततस्त्ववाच्यां श्रीखेटवेदिः करविस्तृतोच्चा ॥ ३१ ॥

दशधा विभजेत्प्राज्ञ इति । तथा दशाननमुपक्रम्य । पंचपंचाशता हस्तैः पंचाशद्भिस्तथापि वेति । तथा द्व्याननेति । पंचविंशतिहस्तैस्तामित्यादिकल्पलतायां । तथा भविष्यपुराणे शतमुखादिहवनं प्रकृत्य । ततस्तु सहितो विप्रैः सूत्रयेन्मंडपं शुभं । उत्तमं शतहस्तेन तदर्धेन तु मध्यमं । जघन्यं तु तदर्धेन शक्तिकालाद्यपेक्षयेति ॥ ३० ॥ अथ वेदिं वक्तुं तद्देशमुपजात्याह ॥अथेति॥ यत्र प्रधानावाहनात्पूर्वं ग्रहाधिवासः ग्रहस्थापनं तत्रेशानदेशे प्रधानं प्रधानवेदिः । ततः प्रधानवेद्याः सकाशादवाच्यां दक्षिणस्यां दिशि श्रीखेटवेदिर्ग्रहवेदिः । सा करेण हस्तेन विस्तृता उच्चा च स्यादित्यर्थः । यथा महारुद्रवा-

स्तुशांत्यादौ प्रधानमीशान्यां तद्दक्षिणे ग्रहा इत्याद्युक्तं भट्टकृतमहारुद्रपद्धतौ ॥ ३१ ॥ अथ कर्मविशेषे वेदिमानं शार्दूलविक्रीडिताभ्यामाह ॥ रुद्रादाविति ॥ अथ वेदिः रुद्रादौ महारुद्रादिहवने चतुःषट्सप्तकरैर्दीर्घा विस्तृता च कथिता ब्राह्मणानां । राजादिषु राजविट्शूद्रादिषु तु यथासंख्यमेकद्वित्रिभिरंगुलैः न्यूना सा पादोच्चा स्वविस्तृतेः पादोच्चा स्यादित्यर्थः । अथ तुलाविधौ तु नवभिरष्टाभिः सप्तभिः करैर्दीर्घा विस्तृता च । अपि वा सा क्रमेण द्वाभ्यां हस्ताभ्यां सार्धकरेण हस्तेन च उच्चा स्यात् । अथ वाप्यादिष्वग्रे वक्ष्यत इति शेषः ॥ अथ वेदिलक्षणं सुबोधिन्यां । इष्टकाभिश्चिता

रुद्रादौ हवनेऽथ वेदिरथ वा वेदां ४ ग ६ नागैः ८ करैरेक १ द्वि २ त्रिभि ३ रंगुलैश्च
कथिता राजादिषु न्यूनता । पादोच्चाथ तुलाविधौ तु नवभि ९ र्नागैः ८ स्वरै ७ र्वापि
सा द्वाभ्यां २ सार्ध $\frac{1}{2}$ करेण हस्त १ विमिताप्युच्चाथ वाप्यादिषु ॥ ३२ ॥

रम्या समंताद्ब्राह्मणस्य च । एकद्वित्र्यंगुलैर्न्यूना सैव क्षत्रादिषु त्रिषु । महामंडपवेदिः स्याच्चतुःषडष्टहस्तका । सकृत्सार्धद्विहस्तोच्चा हीनमध्योत्तमाः क्रमादिति । लिंगपुराणे तुलाप्रकरणे । कृत्वा वेदिं तथा मध्ये नवहस्तप्रमाणतः । अष्टहस्तेन वा कुर्यात्सप्तहस्तेन वा पुनः । द्विहस्ताध्यर्धहस्तां वेति । अत्र वेदित्रयस्य द्विहस्तः सार्धहस्तो हस्तश्चेत्युच्छ्रायो विधेय इति कल्पलता । तथा द्विहस्ताध्यर्धहस्ततः । विस्तारश्चोच्छ्रयो वापिकासिकेपि ॥ ३२ ॥

वेदैरिति ॥ सा वेदी चतुर्भिः पंचभिरथ वा सप्तभिर्हस्तैर्मिता । अथवा मध्ये मंडपमध्ये मंडपनवमांशेन विमिता तुल्या हस्तोच्चकेति प्रतिष्ठादिविषये ज्ञेयं। सापि सर्वत्र चतुरस्त्रेत्यर्थः । अथच सा भूपानां प्रवरं यदभिषेचनं राज्याभिषेकस्तद्विधौ सर्वतोभद्रिका ज्ञेया। जलाशयविधौ जलाशयोत्सर्गादौ पद्मिनी पद्माकारा। पाणिग्रहे श्रीधरी स्यादित्यर्थः। तदुक्तं राजकौस्तुभ-धृतमात्स्ये। पंचसप्तचतुर्वापि करां कुर्वीत वेदिकामिति। क्रियासारे। त्रिभागं मंडपं कृत्वा मध्यभागस्तु वेदिकेति। पूर्वपश्चिमो-दग्दक्षिणत्रित्रिसूत्रैस्त्रिभागं मंडपं कृत्वा तेन मंडपनवमांशो वेदिरिति तात्पर्यं। क्रियासारे वेदिं प्रकृत्य। हस्तमात्रं तदुत्सेधं चतुरस्त्रं समंतत इति । तथा हस्तोन्नता च विस्तीर्णा चतुर्हस्तैः समंतत इति । सामान्येन स्वस्तिकापरपर्यायाश्चतुरस्त्रवेद्या

**वेदैः४साथ शरै५स्तथाप्यथ हयै७र्हस्तैर्मिता वाथवा मध्येमंडपरंध्रभाग ९ विमिताब्ध्यस्त्रापि हस्तोच्चका ॥**
**भूपानां प्रवराभिषेचनविधौ स्यात्सर्वतोभद्रिका ज्ञेया पद्मनिभा जलाशयविधौ पाणिग्रहे श्रीधरी ॥३३॥**

मानमुक्तं । सिद्धांतशेखरे तु वेद्याश्चातुर्विध्यमुक्तं। वेदी चतुर्विधा प्रोक्ता चतुरस्त्रा च पद्मिनी । श्रीधरी सर्वतोभद्रा दीक्षासु स्थापनादिषु । चतुरस्त्रा चतुःकोणा वेदी सर्वफलप्रदा। तडागादिप्रतिष्ठायां पद्मिनी पद्मसंनिभा। राज्ञां स्यात्सर्व-तोभद्रा चतुर्भद्राभिषेचने। विवाहे श्रीधरी वेदी विंशत्यस्त्रसमन्विता । दर्पणोदरसंकाशा निम्नोन्नतविवर्जितेति चतुर्वि-धवेद्या आकार उक्तः। तथा वर्णपरत्वेनापि चतुर्विधवेद्या मानमुक्तं वास्तुशास्त्रे । चतुर्विधा भवेद्वेदी सर्वशांतिकरी नृणां। स्वस्तिका भद्रिका चान्या श्रीधरी पद्मिनी तथा। स्वस्तिका चतुरस्त्रा च भद्रिका भद्रसंनिभा । श्रीधरी विंशतिः

कोणा पद्मिन्यष्टदलान्विता । विप्रेषु सप्तहस्ता च षड्वस्ता क्षत्रियेषु च । पंचहस्ता भवेद्वैश्ये शूद्रे वेदाः प्रकीर्तिता इति ॥३३॥ अथोक्तवेदित्रयकरणप्रकारेषु प्रथमं द्वादशास्रां भद्रिकावेदिं सार्धोपजातिवृत्ताभ्यामाह ॥ वेदीति ॥ यद्धस्ता इष्टवेदिस्तस्या भुजकोटिघातेन फलं विधाय तत् स्वचतुर्विंशांशेनाष्टगुणेन युक्तं कृत्वा द्विगुणं कार्यं । तस्माद्यन्मूलं भवति तन्मानेन वेदिस्थलमध्याद्वृत्तं प्रविधेहि कुर्वित्यर्थः । तस्मिन्वृत्ते दिक्कोणकं चतुरस्रं प्रविधायं तत्र चतुरस्रे विदि-




वेदीफलं स्वाब्धिकरां २४ शकेनाऽष्टघ्नेन युक्तं च पुनर्द्विनिघ्नं । तन्मूलमित्या वलयं तु वेदिस्थलस्य मध्यात्प्रविधेहि तस्मिन् ॥३४॥ दिक्कोणकं वारिधिकोण ४ मेकं तस्मिन्विकाष्ठास्रकमब्धिकोणं । विधाय चाद्यस्य भुजांघ्रिचिह्नात्सूत्रं च संलग्नभुजांघ्रिचिह्ने ॥ ३५ ॥ बाह्यार्धकोष्ठभ्रमिमार्जनेन स्यात्सूर्यकोणा किल भद्रिकैवं । राज्याभिषेके नृवराधिपानां प्रोक्ता मुनींद्रैरपि वास्तुशास्त्रे ॥ ३६ ॥




कोणकं चतुरस्रं कृत्वा तत आद्यं पूर्वं कृतं यच्चतुरस्रं तस्य ये भुजास्तेषु प्रति चतुर्थांशे चिह्नं कृत्वा तस्माच्चिह्नात्संलग्नो योऽपरो भुजस्तच्चतुर्थांशचिह्ने सूत्रं दद्यादेवं चतुर्षु भुजेषु ज्ञेयं । ततो वाह्ये यान्यर्थकोष्ठानि भ्रमिः वृत्तं तेषां मार्जनेन नाशेन सूर्यास्रा द्वादशास्रा भद्रिकावेदिः स्यादित्यर्थः । अत्र चतुर्भद्राभिषेचने । भद्रिका भद्रसन्निभेत्यादिवचनात्समास्रो-

त्कलिकयोर्निवृत्तिः। शेषं स्पष्टं। अथास्याः फलानयनं। तत्र भद्रिकावेदी राज्याभिषेक उक्तत्वात् षड्ढस्ता क्षत्रियेषु चेति वचना-
त्षड्ढस्तोदाह्रियते। तत्रेष्टषड्ढस्तवेदिफलं हस्तात्मकं ३६ तथांगुलात्मकं फलं २०७३६ अस्य चतुर्विंशांशः ८६४ अष्टगुणः
६९१२ अनेन युक्तं फलं २७६४८ द्विगुणं ५५२९६ अस्य मूलं २३५।१।२ अयं व्यासः। अनेन कृतवृत्ते उक्तवद् यच्च-
तुरस्रमुत्पद्यते तस्य फलं वृत्तव्यासवर्गार्धतुल्यं २७६४८ अस्मादुक्ताष्टगुणितचतुर्विंशांशोने सर्वं फलं २०७३६ अथवा
युक्तफलं २७६४८ अस्य द्वात्रिंशदंशः ८६४ अष्टगुणः ६९१२ अनेनोनं युक्तफलं २०७३६ जातं सर्वं फलं। अथात्र
किंचिदुच्यते। भद्रिकावेद्यां समानावयवानि चतुर्विंशतिकोष्ठानि संति परंतु करणप्रकारे तादृशकोष्ठसमान्यष्टौ कोष्ठा-

इष्टवेदीफलं वह्निभि ३ र्व्याहतं लोचनाभ्यां २ हृतं तस्य मूलं ततिः। मंडलं चानया यच्च
तस्मिन्समं वेदकोणं विकाष्टास्रकं कुर्वथो ॥ ३७ ॥ पूर्वदिङ्नागकोणज्यकाद्यंततः सूत्रयुग्मं
विधेह्यापरज्यांतकं। दक्षिणोदग्ज्यकाप्रांतयुग्मे तथा तेन वेदी भवेत्सूर्यकोणाथवा ॥ ३८ ॥

न्यधिकानि संति। अतश्चतुर्विंशांशोऽष्टगुणः वेदीफले युक्तस्तेनैककोष्ठतुल्यानि द्वात्रिंशत्कोष्ठानि भवंति। अतो युक्त-
फलस्य द्वात्रिंशदंशोऽष्टगुणो युक्तफलादूनितश्चेज्जायते सर्वं फलमिति स्पष्टं ॥ ३४ ॥ ३५ ॥ ३६ ॥ अथ प्रकारांतरेण
भद्रिकावेदिं स्रग्विणीवृत्ताभ्यामाह ॥ इष्टेति ॥ इष्टवेद्याः द्वादशास्रायाः फलं वह्निभिस्त्रिभिः गुणितं तथा लोचनाभ्यां
द्वाभ्यां हृतं सद्यत्तन्मूलं ततिर्व्यासः स्यात्। अनया तत्या व्यासेन यन्मंडलं वृत्तं भवेत्तस्मिन्वृत्ते विदिक्कोणकं चतुष्कोणं
कुरु ॥ ३७ ॥ अथो अनंतरं पूर्वदिशि या नागकोणस्याष्टकोणस्य ज्या तस्याः द्व्यंततः द्वयोरंतयोः सकाशात्सूत्रयुग्मं अप-

रज्या पश्चिमदिग्ज्या तदवधिकं विधेहि विस्तारयेति भावः । तथैवाष्टकोणस्य ये दक्षिणोदग्ज्ये तयोर्यत्प्रांतयुग्मं दक्षिण-ज्याप्रांतयुग्ममुदग्ज्याप्रांतयुग्मं चेति तस्मिन्नपि सूत्रयुग्मं विधेहीति । तेन सूर्यकोणा द्वादशकोणा वेदी भवेदित्यर्थः । अथ-



प्रकारांतरेणोक्तभद्रिका वेद्याः पूर्वरूपं



वेति प्रकारांतरार्थः ॥ अथ फलानयनं ॥ तत्रेष्टवेदीफलं २०७३६ । गुणकेना ३ नेन गुणितं ६२२०८ भाजकेना २ नेन भक्ते लब्धं ३११०४ अस्य मूलं व्यासः १७६।३ व्यासवर्गार्धे मध्यचतुरस्रफलं १५५५२ अस्य मूलं वृत्तस्थचतुरस्रज्या १२४।५।६ अनयोनव्यासः ५१।५।२ अस्यार्धं बृहच्छरः २५।६।५ अथ व्यासवर्गस्य सप्तमांशः ४४४३।३।४ अस्य चत्वारिंशदंशः १११।०।६ सप्तमांशे युक्तः ४५५४।४।२ अस्य मूलं वृत्तस्थाष्टास्रिज्याभुजः ६७।४।३ अथ ज्याव्यासयोगः २४३।७ अंतरं च १०८।७ द्वयो-र्घातः २६५५२ मूलं १६३ अनेनोनव्यासः १३।३ दलितो लघुशरः ६।५।४ अनेनोनो बृहच्छरः कोटिः १९।१।१ भुजकोटिघातः १२९६ चतुर्गुणः ५१८४।१ मध्यचतुरस्रफले

प्रकारांतरेणोक्त-भद्रिकावेद्याः सिद्धरूपं



युक्तः २०७३६।१ जातं सर्वं फलं । अत्र किंचिन्न्यूनं फलमायाति । अतः संपूर्णफलार्थे भुजकोटी किंचिद्वर्धिते इति ज्ञेयं ॥ ३८ ॥

अथ श्रीधरीवेदिं द्वाभ्यामिंद्रवज्रावृत्ताभ्यामाह ॥ वेदीति ॥ वेदीफलं स्वषष्ठ्यंशेन द्वादशगुणेन युक्तं कृत्वा द्विगुणं कार्यं । ततो मूलमित्याद्युक्तवच्चतुरस्रद्वयोत्पादनांतं कृत्वा तत आद्यचतुर्भुजस्य भुजार्धं त्रेधा विभज्य भुजार्धस्य समानानि त्रीणि खंडानि कृत्वा मध्यचिह्नद्वयात्पूर्वोक्तवत्सूत्रपाताद्विंशत्यस्रा श्रीधरीवेदिर्भवेत् । नयने अभिरमयतीति सुंदरेत्यर्थः ॥ ३९ ॥ अथ फलानयनं । तत्र कन्याहस्तैः पंचभिः सप्तभिर्वेति समानविकल्पोक्तत्वात्पंचहस्तो-

विंशत्यस्रश्रीधरीवेद्याः पूर्वरूपं



वेदीफलं स्वाभ्ररसां ६० शकेनार्क १२ घ्नेन युक्तं च पुनर्द्विनिघ्नं । तन्मूलमित्यादिविदिक्स्थकोणवेदास्रकांतं तनुयात्ततश्च ॥ ३९ ॥ आद्याब्धिकोणस्य भुजार्धमत्र त्रेधा विभज्यापि च सूत्रपातात् । पूर्वोक्तवच्छ्रीधरीवेदिरत्र (स्याद्वै) भवेन्नखास्रा नयनाभिरामा ॥ ४० ॥

विंशत्यस्रश्रीधरीवेद्याः सिद्धरूपं



दाह्रियते । तत्र पंचहस्तवेदीफलं १४४०० अस्य षष्ठ्यंशः २४० द्वादशगुणः २८८० वेदीफले युक्तः १७२८० द्विगुणः ३४५६० अस्य मूलं १८५।७२ अनेन कृतवृत्ते यच्चतुरस्रमुत्पद्यते तत्फलं १७२८० अस्मादुक्तद्वादशगुणितषष्ठ्यंशोने सर्वं फलं १४४०० अथ सप्तहस्ते उदाहरणं । तत्रेष्टवेदिफलं हस्तात्मकं ४९ तथांगुलात्मकं २८२२४ अस्य षष्ठ्यंशः ४७०।३।१।५ द्वादशगुणः ५६४४।६।३।४ इष्टफले युक्तः ३३८६८।६।३।४ द्विगुणः ६७७३७।४।७

कुंड-

॥ १२ ॥

मूलं २६०।२।१ अयं व्यासः अनेन कृतवृत्ते यच्चतुरस्रमुत्पद्यते तत्फलं ३३८६८।६।३।४ अस्मादुक्तद्वादशगुणितषष्ठ्यंशोनें सर्वं फलं २८२२४ ॥ ४० ॥ अथ समविंशत्यस्रां श्रीधरीमिंद्रवज्रावृत्ताभ्यामाह ॥ वेदीति ॥ इष्टवेद्याः फलं पंचसप्तत्युत्तराष्टत्रिंशच्छतैर्गुणितं तस्मादष्टाशीत्युत्तरैकोनत्रिंशच्छतैर्विभक्ते यल्लभ्यते तन्मूलं समाश्वाश्विमितास्रवेद्या विंशत्यस्रवेद्याः व्यासो भवति तेन कृतवृत्ते व्यासस्य यः षष्ठांशः स्वषोडशांशोनः सा ज्या भवति तन्मितकर्काटकेन प्राक्तः

रत्नावली-

समविंशत्यस्रश्रीधरीवेद्याः पूर्वरूपं



वेदीफलात्पंचनगाष्टराम ३८७५ निघ्नादहीभांककरा २९८८ प्तमूलं । व्यासः समाश्वाश्वि २० मितास्रवेद्या व्यासांगभागः स्वनृपां १६ शहीनः ॥ ४१ ॥ जीवा भवेत्तन्मितकर्कटेन प्राक्तस्तु वृत्तं नखधा २० विभज्य । ज्याविंशतिं तत्र समां प्रदद्याद्वितर्दिरेवं नखकोणका वा ॥ ४२ ॥

समविंशत्यस्रश्रीधरीवेद्याः सिद्धरूपं



वृत्तं नखधा विंशतिधा विभज्य विंशतिचिह्नानि कृत्वेत्यर्थः । तत्र परस्परचिह्नस्पृक्ज्याविंशतिं समानां प्रदद्यात्तेन विंशत्यस्रा वितर्दिर्वेदिर्भवेदित्यर्थः । वेति पूर्वाकारेण विकल्प्यते । स्याद्वितर्दिस्तुवेदिकेत्यमरः ॥ अथ फलानयनं ॥ तत्रेष्टफलं पंचहस्तवेद्याः १४४०० गुणकेनानेन गुणितं ३८७५ ५५८००००० भाजकेन २९८८ अनेन भक्ते लब्धं १८६७।५।४ अस्य

॥ १२ ॥

मूलं १३६।५।२ अस्य षष्ठांशः २२।६।१ अस्य षोडशांशः १।३।२ अनेनोनः षष्ठांशः २१।२।६ जातेयं विंशत्यस्रिज्या ॥ अथ ज्याव्यासयोगः १५८ अंतरं ११५।२।४ द्वयोर्घातः १८२१९।३ अस्य मूलं १३४।७।६ इदं गर्भसूत्रं अनेन ज्या गुणिता २८८०।६ जातमिदं चतुरस्रफलं । इदं पंचगुणं १४४०३।६ जातं सर्वं फलं । स्वल्पांतरत्वाददोषः । एवं सप्तहस्तादावपि ॥ ४२ ॥ अथोत्कलिकविंशत्यस्रां श्रीधरीं वैतालीयछंदसा त्रिभिः पद्यैराह ॥ फलमिति ॥ फलमिष्टवे-

फलमष्टयुगा ४८ हतं शराश्वि २५ हृतं तत्पदमेव विस्तृतिः । अनया
कृतमंडलं समं नख २० धा तद्विभजेत्तु पूर्ववत् ॥४३॥ सुरराजदिगंकतः
क्रमान्नवमांके गुणदानतो मुहुः । नखसंख्यसमत्रिकोणकानि हि याव-
त्प्रभवंति मंडले ॥ ४४ ॥ वृतिमार्जनतोऽपि वा भवेन्नखकोणोत्कलिका
वितर्दिका । कुरुतां च विवाहसंस्कृतौ वरवध्वोर्विपुलर्द्धिवर्धिनीं ॥ ४५ ॥

दीफलमष्टचत्वारिंशता निघ्नं पंचविंशत्या भक्तं तस्य यन्मूलं तदेव विस्तृतिर्व्यासः स्यात् ॥ ४३ ॥ अनेन कृतं यन्मंडलं तत् सुरराजदिक्प्राची तच्चिह्नात्क्रमेण नवमनवमचिह्नैर्मुहुः वारंवारं गुणदानतः सूत्रदानेन विंशतिधा विभजेत् । यावद्विंशति समत्रिकोणानि मंडले प्रभवंति तावदित्यर्थः ॥ ४४ ॥ ततो वृतेर्वृत्तस्य मार्जनेन विंशत्यस्रोत्कलिका वितर्दिका वेदी भवेत् । तां विवाहसंस्कारे वरवध्वोर्विपुला पुष्कला या ऋद्धिः समृद्धिस्तां वर्धयतीत्येतादृशीं कुर्वित्यर्थः । अपिवेति पूर्व-

विंशत्यस्त्रश्रीधरीवेद्याःपूर्वरूपं



प्रकारेण विकल्पः ॥ अथ फलानयनं ॥ तत्रेष्टवेदीफलं पंचहस्ते १४४०० अष्टचत्वारिंशता४८गुणितं ६९१२०० पंचविंशत्या २५ भक्ते लब्धं २७६४८ अस्य मूलं १६६।२।२ अयं वृत्तव्यासः । अथ फलानयनार्थमस्य त्र्यंशः ५५।३।२ अनेनोनव्यासोऽतर्व्यासः ११०।६।७ अस्य षष्ठांशः १८।३।६।४ अस्य षोडशांशः १।१।१।७।२ अनेनोनः षष्ठांशः १७।२।४।४ जातेयं मध्यवृत्तस्य विंशत्यस्त्रिज्यका । बहिर्व्यासः १६६।२।२ अनेन गुणिते सति जातं त्र्यस्रचतुष्टयफलं २८८०।२।२।३ पंचगुणमिदं जातं १४४०१।३।४ सर्वं फलं । अधिकं ध्वजायः स्वल्पांतरत्वाददोषोऽपि ॥ ४५ ॥

श्रीधरीवेद्याःसिद्धरूपं





वेद्याः फलं भूमिसमुद्र ४१ निघ्नं वेदाक्षि २४ भिस्ताद्विभजेच्च लब्धेः ।
मूलं व्यासः पद्मिनीवेदिकायाः सा दिक्कोणा पद्मकुंडोक्तवत्स्यात् ॥ ४६ ॥

अथ पद्मिनीवेदिमुपजातिवृत्तेनाह ॥ वेद्या इति ॥ इष्टवेद्याः फलं चैकचत्वारिंशता गुणितं तच्चतुर्विंशत्या भक्तं या लब्धिर्भवति तस्याः मूलं पद्मिनीवेदिकायाः व्यासो भवति । तेन व्यासेन वृत्तं कृत्वा पद्मकुंडोक्तवद्वक्ष्यमाणपद्मकुंडो-

क्ववत्सर्वकरणेन सा पद्मिनीवेदिः दिक्कोणकाऽष्टदिक्षु कोणा यस्याः स्यादित्यर्थः । अत्र पद्मिनीवेद्याः दिग्विदिक्कोणकत्वं पद्मकुंडस्य दिग्विदिगंतरकोणकत्वमिति भेदः । अन्यत्सर्वं पद्मकुंडोक्तवदित्याशयः ॥ अथ फलानयनं ॥ तत्रेष्टवेदिफलं




२०७३६ एकचत्वारिंशता गुणितं ८५०१७६ अस्माच्चतुर्विंशत्या भक्ते लब्धं ३५४२४ अस्य मूलं १८८।१।५ इदमेव पद्मिनीवेदिव्यासः । अस्य सूक्ष्मचतुरस्रज्या १३३ अस्य वर्गः १७६८९ इदं मध्यचतुरस्रफलं अचतुरस्रबाह्यत्रिकोणफलं यथा चतुरस्रज्या १३३ अनयोनव्यासार्धं लंबः । बहिस्त्रिकोणस्य भुजद्वयकोणद्वयस्य च समत्वात्तद्वयोर्योगे यच्चतुरस्रं तदपि समचतुष्कोणं अतस्तच्चतुरस्रस्य कर्णावपि समावेव । अस्यार्धं ऊनव्यासार्धं च समानमेव भूम्यर्धमपि तत्समं ॥ तथाच न्यासः ॥ व्यासः १८८।१।५ अस्य सूक्ष्मचतुर-




स्रज्या १३३ अनयोनव्यासः ५५।१।५ अस्यार्धं २७।४।६।४ लंबः भूम्यर्धमपि लंबसमं २७।४।६।४ अनयोर्घातः ७६१।३।२।१ चतुर्गुणः ३०४७।३।०।४ चतुरस्रफले युक्तं जातं सर्वं फलं २०७३६।३।०।४ स्वल्पांतरत्वाददोषः ॥ ४६ ॥

अथ प्रकारांतरेण वक्ष्यमाणपद्मकुंडाकृतिपद्मिनीवेदिमिंद्रवज्रावृत्तेनाह ॥ वेदीति ॥ इष्टवेदीफलमेकोत्तरशतेन निघ्नं तस्माच्चतुश्चत्वारिंशदुत्तरशतेन भक्ताद्यन्मूलं तत् व्यासो भवेत् । तेन व्यासेन वक्ष्यमाणं यद्द्वितीयपद्मकुंडं तदाकृतिः पद्मिनीवेदिः स्यादित्यर्थः ॥ अथ फलानयनं ॥ तत्र गुणकः १०१ भाजकः १४४ इष्टवेदीफलं २०७३६ गुणकेन १०१ गुणितं

> वेदीफलाद्भूमिखभूमि १०१ निघ्नाद्वेदाब्धिचंद्रै १४४ र्विहृताच्च मूलं ।
> व्यासो भवेत्तेन च वक्ष्यमाणान्यत्पद्मकुंडाकृतिपद्मिनी स्यात् ॥४७॥




२०९४३३६ भाजकेन भक्ते लब्धं १४५४४ अस्य मूलं १२०।४।६ अस्याष्टास्त्रिज्या द्विद्वीत्यादिना ४६।१।१ अस्या दलं २३।०।४।४ व्यासदलं ६०।२।३ अष्टास्त्रिज्यार्धवर्गः ५३२।२ व्यासार्धवर्गः ३६३५।५।६ वर्गयोरंतरं ३१०३।२।३ अस्य सूक्ष्ममूलं लंबः ५५।५।४ लंबगुणमष्टास्त्रिज्यार्धं १२८४।५।६ अष्टगुणमिदं १०२७७।६जातमिदं मध्याष्टास्त्रिफलं॥अथाष्टास्त्रिज्यैव द्विगुणा धनुर्वृत्तव्यासः ९२।२।२ अस्य परिधिः २९०।०।४ अस्य त्र्यस्त्रिज्या त्रिघ्नं-केत्यादिना ७९।७।२।६ अस्या दलं ३९।७।५।३ अष्टास्त्रिज्याचतुर्थांशोनो धनुर्वृत्तव्यास एव लंबः ६९।१।५ लंबगुणं धनुर्वृत्तांतस्त्र्यस्रफलं २७६५।४।६।२ अथ वृत्तक्षेत्रे परिधीत्यादिना धनुर्वृत्तफलं ६६८९।४।४ अस्मात्र्यस्रफलमूनं ३९२४ अस्य त्र्यंशः १३०८ इदमेव धनुःफलं अष्टगुणं १०२७७।६ अष्टास्त्रिफले युक्तं जातं २०७४१।६ । अत्र पंचांगुलमधिकं तददोषायेति ॥ ४७ ॥



अथ कर्मविशेषे वेदिस्थलान्यनुष्टुभाह ॥ दानेति ॥ दानं तुलापुरुषदानादि । उत्सर्गो नूतनकृतजलाशयादौ स्नानपानाद्यधिकारार्थं कर्मविशेषः । प्रतिष्ठा शिवादिस्थापनं । एतेषु कर्मसु मंडपमध्ये वेदी कथिता । तथा शांतौ ग्रहयज्ञादौ प्राच्यां पूर्वस्यां दिशि तथोदीच्यां वा । सा दर्पणोदरवत्सम्यगाभा यस्याः । दर्पणोदरवत्सुसमेत्यर्थः । तदुक्तं मात्स्ये दानान्युपक्रम्य । सप्तहस्ता भवेद्वेदी मध्ये पंचकराथवेति । तथोत्सर्गं प्रकृत्य तत्रैव । चतुर्हस्तां शुभां वेदिं चतुरस्रां चतुर्मुखां । यथा

दानोत्सर्गप्रतिष्ठासु वेदी मध्ये प्रकीर्तिता ॥ प्राच्यामुदीच्यां शांतौ वा मुकुरोदरवत्समा ॥ ४८ ॥ स्तंभाः षोडश यज्ञदारुजदृढा वेदेर्विदिक्ष्वायताश्चत्वारोऽष्टकरा बहिः शर ५ करास्ते खंडकोणेष्विनाः । चूडाभिः सहिताश्च तन्निखननं सर्वत्र पंचांशकं द्वात्रिंशद्वलिकाः समाश्च सबिलाः कार्यास्ततोऽतद्वये ॥ ४९ ॥

षोडशहस्तः स्यान्मंडपश्च चतुर्मुखः । वेद्याश्च परितो गर्ता रत्निमात्रास्त्रिमेखला इति । प्रतिष्ठाविधौ तत्रैव । हस्तान्षोडश कुर्वीत दश द्वादश वा पुनः । मध्ये वेदिकया युक्तः परिक्षिप्तः समंतत इति । अथ ग्रहशांतिं प्रकृत्य गोभिलः । कुंडस्य प्रागुदीच्यां वा प्राच्यामुत्तरतोऽपि वा । चतुर्हस्तं चतुर्द्वारं कर्तव्यं ग्रहपीठकमिति । पीठं वेदिः ॥ ४८ ॥ अथ मंडपस्तंभान् शार्दूलविक्रीडितेनाह ॥ स्तंभा इति ॥ यज्ञदारु पलाशादि तस्माज्जाता उत्पन्नाश्च ते दृढा एतादृशाः स्तंभाः

षोडशसंख्याकाः कार्या इत्यंतेनान्वयः । ते वेदैर्विदिक्षु विदिशासु अग्न्यस्रपवाय्वीशानेषु आयता दीर्घाश्चत्वारोऽष्टकराः । तथा बहिः मंडपबाह्यदेशे खंडकोणेषु ते स्तंभाः इनाः द्वादशसंख्याकाः शरकराः पंचकरमिता इत्यर्थः । ते चूडाभिः शिखाभिः सहिताः मूलस्थूलत्वापेक्षयाग्रे सूक्ष्मा इत्यर्थः । तेषां स्तंभानां निखननं भूमौ प्रवेशनं पंचांशकं । पंचमांशं भूमौ प्रवेशयेदिति यावत् । सर्वत्रेत्यनेन यत्रयत्र निखननं तत्रतत्र पंचांशकमित्यर्थः । ततस्तदनंतरं द्वात्रिंशद्वलिकाः स्तंभोपरि देयानि काष्ठविशेषाणि ताः अंतद्वये द्वयोरप्यंतयोः सबिलाः बिलेन सहिताः । सच्छिद्रा इत्यर्थः । समा इत्यनेन स्तंभव-

अंतःस्तंभमुखेषु ताश्च विककुप्प्रांताश्चतस्रस्तिरश्चीना ऊर्ध्वमुखा निधेहि सुदृढे
काष्ठे तु कूटाह्वये । सूर्या १२ श्चापि बहिःस्थितेष्विन १२ मितस्तंभेषु पूर्वापरा
देया द्वादश दक्षिणोत्तरगता दिक्तः कृशानोः स्थिताः ॥ ५० ॥

त्सचूडका न भवंतीति । यज्ञदारूण्याह ब्रह्मपुराणे । पलाशाश्वत्थन्यग्रोधप्लक्षवैकंकतोद्भवाः । श्रीपर्ण्युदुंबरो बिल्वश्चंदनः सरलस्तथा । शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः । इति । शारदातिलकेपि । षोडशस्तंभसंयुक्तं चत्वारस्तेषु मध्यमाः । अष्टहस्तसमुच्छ्रायसंख्याश्चूडासमन्विताः । अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशैव ते । पंचहस्तप्रमाणा वै निश्छिद्रा ऋजवः शुभाः । इति । वास्तुशास्त्रे । पंचमांशं न्यसेद्भूमौ सर्वसाधारणो विधिरिति ॥ ४९ ॥ अथ स्तंभोपरि वलिकानिवेशनं शार्दूलविक्रीडितेनाह ॥ अंतरिति ॥ ताः पूर्वोक्ता वलिकाश्चतस्रः विककुप्प्रांता विदिक्षु प्रांता

यासां ताः अंतःस्तंभशिखासु वेदिकोणस्थस्तंभचतुष्टये तथा चतस्रः तिरश्चीनाः कर्णाकारा इत्यर्थः । ऊर्ध्वं मुखानि यासां ताः सुदृढे कूटाह्वये शिखराह्वये काष्ठे मध्यवेद्युपरि वलिकानिवेशनार्थं यत्काष्ठं तस्मिन्निधेहि । प्रवेशयेत्यर्थः । सूर्याः द्वादश वलिकाः बहिःस्थितेषु इनमितस्तंभेषु द्वादशस्तंभेषु पूर्वापराः प्राक्प्रत्यक्प्रांताः तथा द्वादशवलिका दक्षिणोत्तरगताः अवागुदक्प्रांता देयाः । निवेशनीया इत्यर्थः । ता वलिकाश्च कृशानोरग्नेर्दिक्तः स्थिताः स्युरित्यर्थः । तदुक्तं कुंडकल्पलतायां । मध्यस्तंभास्तु ये वेदसंख्याश्चूडान्वितास्तथा । वलिकामूर्धतस्तेषां न्यस्य मध्योच्छ्रितं सृजेत् । द्वादशानामपि तथा चूडासु वलिका न्यसेत् । मंडपायामविस्तारा मध्यस्तंभाग्रतो न्यसेत् । कोणस्तंभाग्रसंलग्ना-

श्चतस्रो वलिकाः पुरा । द्वेद्वे तूभयतोऽन्ये च तासां स्तंभाग्रसंस्थिते । वलिका अपि संस्थाप्याः कृतोपर्यंकुशाकृति ॥५०॥

अथ शतहस्तमंडपादौ स्तंभव्यवस्थां शार्दूलविक्रीडितेनाह ॥ स्तंभानामिति ॥

स्तंभानां नहि षोडशत्वकथनं खव्योमचंद्रे १०० करे तत्र स्युस्त्विह मंडपार्धविमिता मध्यास्तु रामांशतः। बाह्याश्चेदपरास्ततोऽपि लघवः स्युश्चार्थतः स्यान्मितिस्तद्वद्द्वारमपीह मध्यलवतः स्यात्पंचमांशेन च ॥५१॥

शतहस्ते मंडपे स्तंभानां षोडशत्वकथनं तन्नहि । तत्र तु इह मंडपार्धेन विमिताः । मध्याः मंडपतृतीयांशेन । बाह्याः स्युश्चेदपरा अपि स्तंभाः ते ततोऽपि पूर्वस्तंभापेक्षया लघवः न्यूनाः स्युरित्यर्थः । अर्थतः मितिर्मानं स्यात्सर्वत्र । अर्थात्परिमाणमिति सूत्रात् । तद्वत् द्वारमपि वक्ष्यमाणं मंडपद्वारमपि मध्यभागतः पंचमांशेन यथा शतहस्तमंडपे मध्यभागो विंशद्धस्तः तत्पंचमांशश्चतुर्हस्तस्तन्मितं द्वारं स्यादित्यर्थः । तथाच कुंडकल्पलतायां पंचरात्रे । मंडपार्धोच्छ्रितान्वेदसंख्यांश्चूडासमन्वितान् । तथा । स्तंभान्समं

च संस्थाप्य स्तंभद्वादशकं पुनः । बाह्ये पीठप्रमाणेन तत्र तत्र विभागत इति । अस्यार्थः कल्पलतायां । मंडपार्धप्रमाणेन मध्यस्तंभनिवेशनं दशहस्तमारभ्य शतहस्तपर्यंतं समानमेव । दशहस्ताद्यो वेति वाक्येन दशहस्तस्यैव विधानात् । तन्न्यूनेषु त्रिहस्तादिनवहस्तांतेषु स्तंभपरिमाणमार्थिकं । समवेधेन बाह्यस्तंभपरिमाणमाह ॥ स्तंभद्वादशकमिति ॥ द्वादशकमिति द्वादशेत्युपलक्षणं । विस्तरे तु यथाशोभमपरा अपि धारका इति स्मरणात् । बाह्ये बाह्यपरिधौ । सच द्विभूमिके द्वितीयत्रिभूमिके तृतीयश्चतुर्भूमिके चतुर्थ इत्याद्यूह्यं । तथा तत्रैव तन्निवेशस्थानमाह गौतमीये । तत्रतत्र विभागत इति । अत्रापि पीठप्रमाणेनेत्यनुषज्यते । ततश्च पीठप्रमाणेन तृतीयांशेन विभागः । तत्र स्तंभा निवेश्याः । सूत्रविभागत इति पाठे तु स्पष्टमेव । त्रिहस्तमारभ्य नवहस्तपर्यंतं अर्थात्परिमाणमिति न्यायेन ऋत्विक्प्रचारयोग्यं स्तंभपरिमाणं कल्पनीयं । तथाग्रेऽपि तत्रैव । तथाऽपराजितपृच्छायां दशानने कोटिहोमे । मंडपे मध्यमाः स्तंभा मंडपार्धप्रमाणतः । समंततस्त्रिभागेन परितो द्वादशापर इति । भागेन चतुर्थांशेनेत्यनुकल्पः । ब्यानने च । शालवृक्षोद्भवाः स्तंभा मंडपार्धप्रमाणतः । समंततस्त्रिभागेन द्वादशान्ये च वेदित इत्युक्तत्वात् । षट्त्रिंशत्स्तंभेषु तु मंडपे बाह्यपरिधिस्थानां स्तंभानां मंडपत्रिभागेनैव परिमाणं मध्यस्तंभचतुष्टयस्य मंडपार्धेन मध्यपरिधिस्थानां तु मध्यस्तंभापेक्षया न्यूनत्वं अंत्यस्तंभापेक्षया चाधिक्यं युक्त्या कल्पनीयमित्युक्तं प्राक् । एवं चतुर्भूमिकस्तंभादावित्यंतमुक्तं । तथाग्रेऽपि तत्रैव ॥ अथ द्वारपरिमाणं मंत्रमुक्तावल्यां । दिक्षु द्वाराणि चत्वारि विदध्यात्पंचमांशतः । पंचमांशो मध्यसूत्रस्येत्यारभ्य मध्येऽन्यमतमुक्त्वाग्रे चत्वारीत्यस्य मंत्रमुक्तावलीवाक्यस्य तदितरमंडपविषयत्वमित्यंतमुक्तं । अन्यमंडपः शतहस्तादिः ॥ ५१ ॥

अथ कस्मिन्मंडपे कति भूमिभागाः कियत्स्तंभा इत्यादिशिखरिणीवसंततिलकाशिखरिणीभिराह ॥ त्रीति ॥ त्रिहस्तमंडपमारभ्य सप्तहस्तमंडपांतं भूमेर्मंडपभूमेर्विभजनं भागो नहि भवति तथाष्टहस्तादष्टादशहस्तांतं त्रेधा विभागः प्रागपरोदग्दक्षिणसूत्राभ्यां त्रिधा विभागः । तथा विंशतिहस्तादष्टाविंशतिहस्तांतं पूर्ववत् शरैः पंचभिर्विभागः । तद्वत् त्रिंशद्धस्तात्पंचसप्ततिहस्तांतं हयैः सप्तभिर्विभागः । शते हस्ते मंडपे तु दिग्भिर्दशभिर्विभाग इत्यर्थः । अथच उक्तवद्भागेषु कृतेषु

त्रिहस्तात्सप्तांतं नहि भवति भूमेर्विभजनं गजा ८ त्रेधा धृत्यंत १८ मपि नखतो
२० ष्टाश्वि २८ विमितं । शरै ५ स्तद्वत्खाग्नेः ३० शरहय ७५ मितांतेऽपि च
हयैः ७ शते हस्ते दिग्भि १० स्त्वथ च गुणसंपातविमितान् ॥ ५२ ॥

ये सूत्रसंपाता भवंति तद्विमितान् स्तंभान्विनिवेशयेदित्युत्तरेणान्वयः । तथा हि । सप्तहस्तांतमंडपे भूमिविभागाभावात्संपाताभाव एव । तत्रापि बाह्याश्चत्वारः स्युः । बाह्ये चेति वक्ष्यमाणत्वात् । तथाष्टाद्यष्टादशपर्यंतं चत्वारः सूत्रसंपाताः बाह्या द्वादश । विंशत्यारभ्याष्टाविंशतिपर्यंतं षोडश सूत्रसंपाताः बाह्या विंशतिः । त्रिंशदारभ्य पंचसप्ततिपर्यंतं षट्त्रिंशत्सूत्रसंपाताः बाह्या अष्टाविंशतिः । तेन संपातस्तंभबाह्यस्तंभयोगे या संख्या भवति साग्रे स्वयमेव वक्ष्यति ॥ ५२ ॥

सर्वानिति ॥ सर्वान्स्तंभान्पूर्वगदितेन सुष्ठुलक्षणेन लक्षितान्गुणसंधिषु मंडपस्य बाह्ये सूत्रसमाप्तिसमानदेशे च तान्स्तंभान्सं- वेशयेत् । दृढं स्थापयेदित्यर्थः। अथच तेषां उक्तस्तंभानां मितिं संख्यां वच्मि कथयामीत्यर्थः ॥५३॥ हयेति ॥ सप्तहस्त- मंडपांतं चत्वारः स्तंभाः । तदुपर्यष्टहस्ताद्यष्टादशांतं नृपाः षोडश । ततो विंशत्यारभ्याष्टाविंशतिपर्यंतं षट्त्रिंशत् । तत- स्त्रिंशदारभ्य पंचसप्ततिपर्यंतं जलनिधिरसाः चतुःषष्टिः स्युरित्यर्थः । शते हस्ते धरित्रीसूर्याः एकविंशत्युत्तरशतं स्तंभाः स्युरि-

सर्वांश्च पूर्वगदितेन सुलक्षणेन तान्लक्षितान्हि गुणसंधिषु मंडपस्य । बाह्ये च सूत्रपरिपूर्तिस- मानदेशे संवेशयेदथ च वच्मि मितिं हि तेषां ॥ ५३ ॥ हयांतं ७ चत्वारस्तदुपरि नृपा १६ ह्याधृति १८ मितं ततः षट्त्रिंशत्स्याद्वसुनयन २८ हस्तांतमपि च । ततो बाणाश्वांतं ७५ जलनिधि- रसाः ६४ स्युस्त्विह शते धरित्रीसूर्या १२१ स्ते कु १ यम २ गुण ३ वेदा ४ अ्रक्कु १० भुवः १ ॥५४॥

त्यर्थः । तैः स्तंभैः क्रमेण सप्तहस्तांतं एकभूः । ततोष्टाद्यष्टादशांतं द्विभूः । ततो विंशत्याद्यष्टाविंशत्यंतं त्रिभूः । ततस्त्रिंशदारभ्य पंचसप्ततिपर्यंतं चतुर्भूरित्यर्थः । शतहस्तमंडपस्तु दशभूः सर्वमते स्यात् । तत्रापि मध्यकोष्ठचतुष्टयस्यैकीकरणेन पंचभूरपि सैव भवतीत्यर्थः । यदा कोष्ठचतुष्टयैकीकरणं तदा विंशत्युत्तरशतं स्तंभा इति बुद्धिमतोह्यं । तदुक्तं कल्पलतायां ।



१ किंवा १२१ वात्रेनाः क १ श्रि २ गुण ३ निगमा ४ शा १० शुग ५ भुवः इति पाठांतरं.

चतुरस्रं समं शुद्धं भुजकर्णविशोधितमित्यादिवाक्यैस्त्रिहस्तादयो नवहस्तांता मंडपा उक्तास्तेषां मध्ये सप्तहस्तांतानां नामाकारविशेषस्यानुक्तत्वात्षोडशादिस्तंभनिवेशासंभवादौचित्याच्च चतुःस्तंभत्वमेव युक्तं । उक्तंच सिद्धांतशेखरे। एकभौमं द्विभौमं वा त्रिभौमं पंचभूमिकमिति। वाशब्दाच्चतुर्भूमिकमपि । एकभौमत्वं चतुःस्तंभमंडपानामेव संभवति । अष्टहस्तमारभ्याष्टादशहस्तपर्यंतं षोडशस्तंभत्वं। विंशतिहस्तमारभ्याष्टाविंशतिहस्तपर्यंतं षट्त्रिंशत्स्तंभत्वं। त्रिंशद्धस्तमारभ्य चतुःषष्टिस्तंभत्वं। तादृशपरिमाणस्तंभासंभवे षोडशस्तंभत्वमेव वा। सर्वेषां यथावचनं व्यवस्था। सा चाग्रे दर्शयिष्यते। तेषां नामान्यपि तत्रैवोक्तानि। घनो घोषो विराजश्च कांचनः कामराजकः। सुघोषो घर्घरो दक्षो गहनो नव मंडपा इति। तथा। चत्वारिंशत्करा भूमिः पंचाधिक्येन विभ्रमः। पंचाशत्करविस्तारो विपुलो विपुलाख्यय इति । विपुलाख्यय इति पंचाशत्करपंचसप्ततिहस्तः शतहस्तश्चेति। तत्र पंचसप्ततिहस्तो जपाभिषेके पंचसप्ततिहस्ते वेद्याम्नानात्सिध्यति। शतहस्तस्तु हेमाद्रौ शांतिकांडेऽभिहितः। भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा। पुण्याहं वाचयेत्पूर्वं कृत्वा विप्रान्सुपूजितान्। ततस्तु सहितो विप्रैः सूत्रयेन्मंडपं शुभं। उत्तमं शतहस्तं तु तदर्धेन तु मध्यमं। जघन्यं च तदर्धेन शक्तिकालाद्यपेक्षयेत्यंतमुक्तं। तथा तत्रैव सिद्धांतशेखरमते तु षोडशहस्तादीनां मंडपानां कनिष्ठत्वादिकमुक्त्वा स्तंभसंख्यांतरमप्युक्तं। षोडशस्तंभसंयुक्तं षट्त्रिंशत्स्तंभसंयुतं। चतुःषष्ट्यंघ्रिसंयुक्तं मंडपावाधमादिकमिति। अंघ्रयः स्तंभाः। शतहस्तादीनां रचनाप्रकारस्तु प्रतिपदोक्त एव। प्रयोजनवशाच्छतहस्ताधिकप्रमाणे मंडपे यथाशोभमधिका अपि स्तंभाः कर्तव्या इत्युक्तं। हेमाद्रौ भविष्यपुराणे। चतस्रो धारिकाः कोणे द्वेद्वे द्वारेषु पार्श्वयोः। विस्तारे तु यथाशोभमपरा अपि धारिका इति। धारिकाः स्तंभाः।

तेच स्तंभा उक्ताः पंचरात्रे । सारदारूद्भवान्स्तंभान्दृढान्कुर्यादृजून्समानिति । कालोत्तरेऽपि । स्तंभा यज्ञियवृक्षस्य शोभना ऋजवः शुभाः । अलाभे यज्ञकाष्ठानां सारदारुमयाः शुभाः । कर्तव्या दारुमात्रस्य तदलाभेऽपि यत्नत इति ॥ ५४ ॥ अथ स्तंभस्थूलतामुपेंद्रवज्रयाह ॥ दशेति ॥ ते सर्वे पूर्वोक्ता वक्ष्यमाणतोरणस्तंभा अपि दशांगुलसूत्रेण संवेष्टनयोग्याः स्युरिति शेषः । कुंडोद्योतेऽप्येवमेवोक्तं । पद्धतीकृत् कोटिहोमपद्धतीकारः तेन सूत्रेण कुगुणेनैकत्रिंशदंगुलात्मकेन वेष्टनयोग्याः स्युरित्याहुरित्यर्थः । तथाच शारदातिलके । दशांगुलप्रमाणेन तत्परीणाह ईरित इति । तथात्र पद्धतिरपि ।

दशांगुलैः संमितसूत्रकेणाभितस्तु संवेष्टनशालिनस्ते । अथापि सर्वे कुगुणेन ३१ तेन संवेष्ट्यमाना इति पद्धतीकृत् ॥ ५५ ॥ यद्यप्युक्तं कल्पवल्लीकृतापि स्तंभानां वै मंडपार्धादिमानं ॥ अत्युच्चत्वात्पद्धतीकृन्मते नो तस्मादत्र प्रोच्यते तन्मतेन ॥ ५६ ॥

परिणाहो विशालता । ज्योतिःशास्त्रोक्तप्रकारेण चैकत्रिंशदंगुलपरिधिसूत्रेण स्थूलता ज्ञेयेति । अत्रोत्तमाधममंडपेन व्यवस्था ज्ञेयेति मम प्रतिभाति ॥ ५५ ॥ अथ पद्धतीकृन्मतेन शतहस्तमंडपकरणं शालिन्युपजातिकाभ्यामाह ॥ यद्यपीति ॥ यद्यपि कुंडलताकारेण स्तंभानां मंडपार्धादिमानं यत्पूर्वमुक्तं तदत्युच्चत्वात्कोटिहोमपद्धतीकारमते नो न संमतमित्यर्थः । तस्मादत्र ग्रंथे तन्मतेन पद्धतीकृन्मतेन तत्करणं प्रोच्यत इत्यर्थः ॥ ५६ ॥

मंडपमिति ॥ मंडपं शतहस्तमंडपं दशधा पूर्वपश्चिमदक्षिणोदक्सूत्रैर्दशधा विभज्य तेन दशदशहस्तपरिमितानि शतकोष्ठानि भवंति। तेषु यत्र यत्र स्थाने गुणसंधिः सूत्रसंपातो भवति तत्रतत्र तस्मिंस्तस्मिन्स्थाने दशहस्तान्स्तंभान् विनिवेशयेत्। वहिरपि शरहस्तान्पंचहस्तान्विनिवेशयेदित्यर्थः ॥ तथाच कोटिहोमपद्धतिः ॥ तत्र शतहस्ते मंडपे वहिः पंचहस्तान्स्तंभान् मध्ये स्तंभचतुष्टयमष्टहस्तं दशहस्तं वा दत्त्वा मध्ये दशदशहस्तोपरि मध्यस्तंभसमांस्तंभान्दत्त्वोपरि तिर्यक्काष्ठानि दद्यात्। ततो मध्यस्तंभचतुष्कोपरि किंचिदुच्चं कुर्यात्। अस्याशास्त्रीयत्वेऽपि सौकर्यार्थत्वादिति । दशमुखद्विमुखादौ तु पूर्वोक्तवदिति

मंडपं तु दशधा विभज्य वै यत्र यत्र च भवेद्गुणसंधिः ॥

तत्र तत्र विनिवेशयेद्दशहस्तकानपि बहिः शरहस्तान् ॥ ५७ ॥

द्वाराणि दिक्षु द्विकराणि चाल्पे मध्ये तु वेदांगुलवर्धितानि ॥

श्रेष्ठे तु नागां ८ गुलवृद्धिरुक्ता तं छादयेत्तानि तु वर्जयित्वा ॥ ५८ ॥

ज्ञेयं ॥ ५७ ॥ अथ कनिष्ठादिमंडपेषु द्वाराणींद्रवज्रयाह ॥ द्वाराणीति ॥ मंडपस्य द्वाराणि दिक्षु पूर्वाऽवाक्प्रत्यगुदक्षु कुर्यात्। तान्यल्पे कनिष्ठे मंडपे द्विकराणि द्विहस्तोन्मितानि। मध्ये मध्यममंडपे वेदांगुलैश्चतुरंगुलैर्वर्धितानि। श्रेष्ठे उत्तममंडपे तु नागांगुलैरष्टांगुलैर्वृद्धिर्वर्धनं उक्ता कथितेत्यर्थः। तानि द्वाराणि वर्जयित्वा तं मंडपं छादयेदित्यर्थः। तदुक्तं पंचरात्रे। कनिष्ठे द्विकरं द्वारं चतुरंगुलवृद्धितः। मध्यमोत्तमयोरिति। क्रियासारे। आच्छाद्या मंडपाः सर्वे द्वारवर्जं तु सर्वतः इति ॥५८॥

अथ मंडपाच्छादनं वसंततिलकयाह ॥ वंशैरिति ॥ ततो द्वारकरणानंतरं सरलैः ऋजुभिः वंशैर्वेणुभिः सुकटैः 'चटाँई' इतिख्यातैस्तृणकृतपट्टिकाविशेषैरथापि नारिकेलकदलैः पत्रैरथवा पद्मैः कमलैः तं मंडपमाच्छादयेदिति पूर्वेणान्वयः। स्थूणाः स्तंभान् सुदर्पणकैः सुष्ठु आदर्शैः सुपटैः सुवस्त्रैर्घंटिकाभिश्च संभूषयेच्छोभायुक्तान्कुर्यादित्यर्थः। तदुक्तं क्रियासारे। नारिकेलदलैर्वापि पंकजैर्वाथ वेणुभिः। आच्छाद्या मंडपाः सर्वे द्वारवर्जं तु सर्वतः इति । वास्तुशास्त्रे । कटैः सद्भिश्च संच्छाद्या विजयाद्याश्च मंडपाः इति । हयशीर्षपंचरात्रे । दर्पणैश्चामरैर्घंटैः स्तंभान्वस्त्रैर्विभूषयेदिति । अथ स्थूणाः स्यात्सू-

वंशैस्ततश्च सरलैः सुकटैरथापि तं नारिकेलकदलैरथवापि पद्मैः। स्थूणाः सुचामरसुदर्पणकै-
रथापि संभूषयेत्तु सुपटैरथ घंटिकाभिः ॥ ५९ ॥ तस्मात्करे वा द्विकरेऽपि हस्तैर्दीर्घाणि वाहां-
७ ग ६ शरे ५ स्तु काष्ठैः। अश्वत्थयज्ञांगजटीवटानां श्रेष्ठादिषु स्युः खलु तोरणानि ॥ ६० ॥

र्थां स्तंभे गृहस्य चेति मेदिनी ॥ ५९ ॥ अथ तोरणानींद्रवज्रयाह ॥ तस्मादिति ॥ तस्मान्मंडपात्करे हस्तांतरे द्विहस्तांतरे वा पंचषट्सप्तहस्तैर्दीर्घाणि अश्वत्थः पिप्पलः यज्ञांग औदुंबरः जटी प्लक्षः वटो न्यग्रोधस्तेषां काष्ठैः श्रेष्ठादिषु मंडपेषु तोरणानि बहिर्द्वाराणि कुर्यादित्यग्रेणान्वयः। उदुंबरो जंतुफलो यज्ञांगो हेमदुग्धकः। प्लक्षो जटी पर्कटी स्यात्। तोरणोऽस्त्री बहिर्द्वारमिति चामरः। तदुक्तमाग्नेये। पंचषट्सप्तहस्तानि खाताद्धस्ते स्थितानि त्विति। पिंगलामते। हस्तद्वयं बहिस्त्यक्त्वा तोरणानि निवेशयेदिति। महाकपिलपंचरात्रे। अश्वत्थोदुंबरप्लक्षवटशाखाकृतानि च। मंडपस्य प्रतिदिशं द्वाराण्येतानि

कारयेदिति । द्वाराणि तोरणानि ॥६०॥ अथ तोरणमध्यावकाशमनुष्टुब्वृत्तेनाह ॥ द्विकरेति ॥ तानि तोरणानि द्विकराण्यायतानि द्विकरपरिमितायामानि अल्पे कनिष्ठमंडपे मध्यमोत्तममंडपयोस्तानि षडंगुलैर्द्वादशांगुलैश्च वर्धितानि दिक्षु चतुर्दिक्षु कुर्यादित्यन्वयः । मध्यमे मंडपे षडंगुलोत्तरद्विहस्तानि । उत्तमे द्वादशांगुलोत्तरद्विहस्तानीत्यर्थः । तदाह वसिष्ठः । कनिष्ठमंडपे कुर्याद्द्विकरायतिकानि च । करपादार्धमानेन वृद्ध्या मध्योत्तमेषु चेति कल्पलतायां ॥ ६१ ॥ अथ तोरणे फलकत्रिशूलादिनिवेशनमिंद्रवज्रयाह ॥ प्राच्यादीति ॥ प्राच्यादिचतुर्दिक्षु तेषां तोरणानां चूडासु शिखासु उपरितः मनोज्ञं सुंदरं

द्विकराण्यायतान्यल्पे मध्यमोत्तमयोरपि । षड्द्वादशांगुलैः कुर्याद्वर्धितानीह दिक्षु च ॥ ६१ ॥
प्राच्यादिदिक्षूपरितो मनोज्ञं चूडासु देयं फलकं हि तेषां । तदर्धमानं तु निवेशनीया मध्ये सजातीयकदारुकीलाः ॥ ६२ ॥ अल्पादिके दि १० ग्रवि १२ शक्र १४ पर्वैर्दीर्घास्तताः स्वांघ्रिमिता मनोज्ञाः । विष्णवायुधाभा अथ विष्णुयागे शैवे त्रिशूलाश्च धरां १ गुलोनाः ॥ ६३ ॥

फलकं काष्ठकृतपट्टिकाकारं तस्मात्तोरणदैर्घ्यादर्धमानं मितिर्यस्य तद्देयं निवेशनीयं । ततस्तदनंतरं तोरणसजातीयकाष्ठानां कीलाः इह फलकमध्ये निवेशनीया इत्यर्थः । अर्थात्फलकस्येति । तदुक्तं शारदातिलके । तिर्यक्फलकमानं स्यात्स्तंभानामर्धमानतः इति । महाकपिलपंचरात्रे । देवास्तोरणरूपेण संस्थिता यज्ञमंडपे । सर्वविघ्नविनाशार्थं रक्षार्थं चाध्वरस्य चेति ॥ ६२ ॥ अथ कीलानां मानमिंद्रवज्रयाह ॥ अल्पेति ॥ अल्पमध्यश्रेष्ठमंडपेषु दशद्वादशचतुर्दशपर्वैरंगुलीभिर्दीर्घाः

स्वाग्रिणा स्वचतुर्थांशेन मितास्तताः विस्तृताः कीलाः । विष्णुयागे विष्णुयजने विष्ण्वायुधाभाः विष्ण्वायुधानि शंखचक्रगदांबुजानि तदाभास्तद्वदाकाराः । शैवे शिवयजने तु सर्वेपि त्रिशूलाकाराः धरांगुलोना एकांगुलोनाः । विष्ण्वायुधापेक्षयेति शेषः । एतादृशाः स्वजातीयकं तोरणकाष्ठजातीयकं यद्दारु काष्ठं तस्य कीलाः । निवेशनीया इति पूर्वेणान्वयः । तदुक्तं वास्तुशास्त्रे । मस्तके द्वादशांशेन शंखचक्रगदांबुजं । मानादिक्रमयोगेन न्यसेत्तेषां स्वदारुजमिति । पिंगलामते । शूलेन चिह्निताः कार्या द्वारशाखास्तु मस्तके । शूले नवांगुलं दैर्घ्यं तुरीयांशेन विस्तृतिरिति ॥ ६३ ॥ अथ कीलानां निवेशने विकल्पानुपेंद्रवज्रयाह ॥ अथेति ॥ अथ विष्णुयजने एकं चक्रमेव सर्वत्र कुरु । तथा शिवस्य यजनेऽपि करेण दीर्घांस्त्रीं-

अथापि विष्णोर्यजने सुचक्रं त्रिशूलकांस्त्रीनथ वा शिवस्य । करेण दीर्घान्कुरु यस्य यज्ञस्तदायुधान्येव नृपांगुलै १६ र्वा ॥ ६४ ॥ अथवापि हि तोरणानि वा स्युस्त्वधमेऽपि करेण चौच्च्यमेषां । द्विकरौच्च्यमितः समे वरे स्यात्फलकं तु तदर्धताधिकं वा ॥ ६५ ॥

स्त्रिशूलान्प्रतितोरणं कुरु । अथवा यस्य यज्ञस्तदायुधानि षोडशांगुलैर्दीर्घाणि कुर्वित्यर्थः । यथा गणेशस्यांकुशादि । तदुक्तं हयशीर्षे । तोरणस्तंभमूलेषु कलशान्मंगलांकुरान् । प्रदद्यादुपरिष्टात्तु कुर्यात्क्षेत्रं सुदर्शनमिति । मंत्रमुक्तावल्यां । अग्रयोर्मध्यभागे च पट्टिकायां त्रिशूलकानिति । क्रियासारेऽपि । तोरणं घटयित्वैवं मूर्ध्नि शूलत्रयं न्यसेत् । शूलं हस्तायतं तेषामिति । अपराजितपृच्छायां तु विशेषः । यद्दैवत्यः क्रतुः कार्यो वाहनान्यायुधानि वा । तत्र तस्य न्यसेद्धीमानंगुलैः षोडशाधिकैरिति ॥ ६४ ॥ अथ तोरणविकल्पानेकरूपभुजंगप्रयातवृत्ताभ्यामाह ॥ अथवेति ॥ तोरणानि वा स्युरित्यर्थः ।

एषा तोरणानां औच्चयं उच्चतां अधमेऽपि मंडपे करेणैकहस्तेन इतो मंडपद्वारात् समे मध्यमे वरे श्रेष्ठे द्विकरौच्चयं स्यादिति । तत्फलकं तेषां फलकं तु तदर्धताधिकं वा उच्चतापेक्षया अर्धाधिकं वेत्यर्थः । तदुक्तं कुंडकल्पलताधृताऽपराजितपृच्छायां । तोरणान्यपि चत्वारि द्वारादधिकराणि तु । परिधिस्तंभतोच्चानि युगुलैर्युगुलैः करैरिति । द्वारादधिकरोंतरं येषां तानि स्तंभत उच्चानीति पदच्छेदः संधेश्छांदसत्वादिति । युगुलैर्युगुलैरिति वीप्सा तु दशहस्तमारभ्य शताधिकहस्तमंडपाभिप्रायेणेति । तथाग्रेपि तत्रैव । ततश्च द्वारापेक्षया तोरणस्य न्यूनताया लोकविरोध इत्यंतमुक्तं । शारदातिलके । तिर्यक्फलकमानं स्यात्स्तंभानामर्धमानतः इति । कुंडरत्नाकरस्तु स्तंभांतरालतिर्यक्फलकमानयोस्तुल्यत्वेन फलकनिवेशासं-

वटोदुंबराश्वत्थजम्बुद्भवानि ह्यलाभे शमीखादिराम्रैश्च वा स्युः ।
तथैकेन वा यज्ञियेनैव कुर्यादिहैवोच्चतार्धस्तृतान्येव दिक्षु ॥ ६६ ॥

भवादसंगतमित्युक्तवांस्तन्न । चूडासु फलकनिवेशस्य इष्टार्थत्वेनार्थिकत्वात्तदर्थमुक्ताधिककल्पनेपि दोषाभावादित्यंतमुक्तं कल्पलतायां ॥ ६५ ॥ वटेति ॥ वटोदुंबराश्वत्थप्लक्षोद्भवानि उक्तकाष्ठालाभे शमीखादिराम्रकाष्ठैरथ वैकेनैव यज्ञियेन यज्ञियवृक्षेण पूर्वोक्तचतुर्णां मध्ये एकेनैव तानि तोरणानि स्युरित्यर्थः । इह मंडपे दिक्षु चतुर्दिक्षु उच्चतार्धस्तृतानि स्तंभोच्चत्वापेक्षयार्धस्तृतानि विस्तृतानि अर्धाधिकानि वेति कुंडकल्पलतामतं पूर्वमेवोक्तं । सिद्धांतशेखरे । न्यग्रोधतोरणं पूर्वे याम्ये त्वौदुंबरं मतं । पश्चिमेऽश्वत्थसंभूतमुत्तरे प्लक्षतोरणमिति । क्रियासारे । प्लक्षोदुंबरजाश्वत्थवटजास्तोरणाः क्रमात् । पूर्वादितो विधातव्या यद्वाद्यंतविपर्ययः इति । सिद्धांतशेखरे । एकमेषामलाभे स्यात्तदभावे शमीद्रुमः । खादिरो वा रसा-

लश्च तालो वा तोरणे स्मृतः इति । तथा तोरणानां च सर्वेषामुच्छ्रायार्धेन विस्तृतिरिति । आग्नेयेऽपि तोरणं प्रकृत्य । तदर्धविस्तृतानि स्युर्युतान्यग्रे ध्वजादिभिरिति ॥ ६६ ॥ अथ ध्वजान्स्रग्धरावृत्तेनाह ॥ वंशेष्विति ॥ अष्टौ ध्वजाः दिक्षु वंशेषु वेणुषु स्युरित्यन्वयः । ते ध्वजाः स्वहरितः स्वदिशः तासामभिमुखाः संमुखा इत्यर्थः । दिशः पांतीति ते इंद्राद-यस्तेषां वाहाः वाहनानि गजादीनि तैरंकिताश्चिह्निता इत्यर्थः । ये दैर्घ्ये दीर्घतायां पंचहस्ताः येषां ततिर्विस्तृतिर्हस्तद्वयेन

वंशेष्वष्टौ ध्वजाश्च स्वहरिदभिमुखा दिक्पवाहांकितास्ते दैर्घ्ये ये पंचहस्तास्ततिरपि गदिता हस्तयुग्मेन येषां । वर्णैस्ते पीतरक्तासितविसितसिताश्वेतशुभ्रातिशुभ्राः स्युश्चैते चाष्टदिक्षु प्रभवति नवमो मंडपस्यैव मध्ये ॥ ६७ ॥ अत्युच्चे सुविचित्रितो गुणकरव्यासस्तु दीर्घस्तथा हस्तैः स्याद्दशभिः सुचामरयुतप्रांतेऽपि घंटान्वितः । दिक्पालास्त्रयुता दिगीशरुचयस्ताः स्युः पताकाः शुभा दैर्घ्यं सप्तकरं तथा यतिरथो तासां करेणोन्मिता ॥ ६८ ॥

गदिता कथिता । तेषां वर्णानाह । ते ध्वजाः वर्णैः पीतः प्रसिद्धः रक्तोऽरुणः असितः कृष्णः विसितोऽपि कृष्णः सितः श्वेतः अश्वेतोऽपि धूम्रः । अल्पत्वस्यापि नञर्थत्वात् । शुभ्रः श्वेतः अतिशुभ्रश्चापि श्वेत इत्यर्थः । नवमो ध्वजः मंडप-मध्ये एव भवति । तदुक्तं गरुडपुराणे । पंचहस्ताध्वजाः कार्या वैपुल्येन द्विहस्तका इति । प्रतिष्ठासारसंग्रहे । पीतरक्तादि-वर्णाश्च पंचहस्तध्वजाः स्मृताः इति ॥ ६७ ॥ अथ पूर्वोक्तं नवमं ध्वजं पताकाश्च शार्दूलविक्रीडितवृत्तेनाह ॥ अतीति ॥

सर्वध्वजवंशापेक्षया द्विगुणे त्रिगुणे वा वंशे सुष्ठु विचित्रितः । अनेकवर्णयुक्त इति भावः । त्रिकरैर्विस्तृतः तथा दशभिः करैर्दीर्घः स्यादित्यर्थः । सुष्ठु चामरेण युतं यद्प्रांतं वंशस्याग्रं तस्मिन्घंटयान्वित इत्यर्थः ॥ दिगिति ॥ अथो पताकाः दिक्पालानामस्त्राणि शस्त्राणि तैर्युताश्चिह्निताः दिगीश्वरा इंद्रादयस्तन्निभाः वर्णैस्तत्तुल्याः । तासां पताकानां दैर्घ्यं सप्तकरं । तथा यतिर्विस्तृतिः करेणोन्मिता हस्तमात्रेत्यर्थः । एतादृश्यः पताकाः स्युर्भवेयुः । उक्तंच रुद्रप्रसादे । एको महाध्वजः कार्यो मंडपोपरि मध्यतः । अत्युच्चो दशहस्तः स्याद्दीर्घस्त्रिहस्तविस्तृतः । चामरेण युतः शीर्षे प्रांते सक्षुद्रघंटिक इति । पताका

पीतस्वर्णरुची ततोऽजनरुची श्वेतः शुकाभः सितः श्वेतश्चेति शतक्रतुप्रभृ-
तयः स्युश्चोक्तवर्णाः शुभाः । वज्रं शक्तिरथापि दंडक इति स्युः खड्गपाशां-
कुशाः शस्त्राण्येव गदा त्रिशूल इति वै शक्रादिकानां क्रमात् ॥ ६९ ॥

अपि मात्स्ये । लोकेशवर्णाः परितः पताका मध्ये ध्वजः किंकिणिकायुतः स्यादिति । सारसंग्रहेऽपि । प्रतिकुंडं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः । दीर्घास्ताः सप्तहस्ताः स्युः सप्तमांशेन विस्तृताः । लोकपालानुवर्णेनेति ॥ ६८ ॥ अथ लोकेश-वर्णशस्त्राणि शार्दूलविक्रीडितवृत्तेनाह ॥ पीतेति ॥ पीतश्च स्वर्णरुचिश्च तौ । अंजनं कृष्णवर्णोपलक्षकं तद्वत् कांतिर्ययोः । ततः श्वेतः सितः शुकाभो हरितः सितः श्वेतश्चेति उक्तवर्णा येषां एतादृशाः शतक्रतुप्रभृतयः शुभाः शोभनाः स्युरि-त्यर्थः । अथ शक्रादिकानां क्रमात् वज्रं शक्तिर्दंडः कोदंडः खड्गश्च पाशश्चांकुशश्चेति ते गदा त्रिशूलश्चेति शस्त्राणि स्युरि-

त्यर्थः । अत्रोदग्दिक्स्वामी कुबेरपक्षे ततोंजनरुची श्वेतो हरित्स्वर्णभ इति पाठांतरं कल्प्यं । वर्णाः पुराणांतरे । इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः । कुबेरश्च सुवर्णाभो वह्निश्चापि सुवर्णभः । तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते । ईशानस्तु भवेद्गौर इति ॥ ६९ ॥ अथ तेषां वाहनानि प्रमाणिकावृत्तेनाह ॥ गज इति ॥ दिगीशवाहनान्युच्यंत इति शेषः । गजः प्रसिद्धः हुडुर्मेषः रजस्वलो महिषः मरुत्प्लवः सिंहः वल्कवान्मत्स्यः कुरंगमो हरिणः हयवृषौ प्रसिद्धौ । मेषस्तु रोमशः । संस्फालहुडुभेडाश्चेति । महिषस्तु रजस्वल इति । सिंहः कंठीरवो भीमविक्रांतः करिमाचलः । पंचशि-

गजो हुडू रजस्वलो मरुत्पवश्च वल्कवान् । कुरंगमो हयो वृषो दि-
गीशवाहनान्यमी ॥ ७० ॥ न्यसेत्तांस्तान्हरित्स्वाशा १० करवंशस्य
मूर्धनि । नवमीमपि सुश्वेतां मध्ये रुद्रेंद्रयोर्न्यसेत् ॥ ७१ ॥

खश्च शैलाटः पारींद्रः श्वेतपिंगलः । मरुत्प्लवश्चेति । अनिमेषो वल्कलवानपि मीन इति । एणः कुरंगमो रिश्य इति च त्रिकांडशेषः । क्रियासारे । मातंगवस्तमहिषसिंहमत्स्यैणवाजिनः । वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् इति ॥ ७० ॥ अथ ध्वजपताकानिवेशनं वंशमानं चानुष्टुब्वृत्तेनाह ॥ न्यसेदिति ॥ तान्पूर्वोक्तान्ध्वजान्पताकाश्च हरित्स्वष्टदिक्षु दशकरवंशस्य मूर्धन्यग्रे न्यसेत्स्थापयेदित्यर्थः । तथा नवमीमपि पताकां शुभ्रवर्णां रुद्रेंद्रयोरीशानीपूर्वयोर्मध्ये न्यसेदित्यर्थः । उक्तंच क्रियासारे । मंडपस्य बहिर्दंडैर्दशहस्तायतैः सह । पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत्क्रमादिति । प्रतिष्ठासार-

संग्रहे । द्विपंचहस्तैर्दंडैस्ते वंशजैः संयुतास्तथेति । सोमशंभौ । दशहस्ताः पताकानां दंडाः पंचांशवेशिताः । पताका आयुधांकाश्च पुष्पचंदनचर्चिता इति । नवमी तुहिनप्रभेति सारसंग्रहे ॥ ७१ ॥ अथ ध्वजपताकानां मतांतराणींद्रवज्रोपजातींद्रवज्राभुजंगप्रयातानुष्टुब्वृत्तैराह ॥ शक्रेति ॥ चतुर्दशद्वादशदशकरैः श्रेष्ठाः । द्वादशदशाष्टकरैर्मध्याः । नवाष्टसप्तकरैरधमाः । सप्तषट्पंचकरैरधमाधमाश्चेत्यर्थः ॥ ७२ ॥ दीर्घा इति ॥ ते ध्वजाः उक्तकरैर्दीर्घाः नेत्रायतिका द्विहस्तविस्तृता

शक्रे १४ न १२ पंक्ति १० प्रमितैः करैस्तु श्रेष्ठास्तथा सूर्य १२ हरि १० द्विजै ८ स्तु ।
मध्या अथो गो ९ ष्ट ८ नगैः ७ कनिष्ठा मुन्यं ७ ग ६ बाणै ५ रधमाधमाश्च ॥ ७२ ॥
दीर्घास्तु नेत्रा २ यतिकास्तथैषामग्रं तु वेदै ४ र्विमितं त्रिकोणं । अथापि वा नेत्र-
२ करोन्मितास्ते नखांगुलैरायतिकास्तथा च ॥ ७३ ॥ सर्वेऽथवा बाहुमिता ध्वजाः स्युः
सूर्यां १२ गुलैरायतिका दशैव । पक्षे यदा दिक्प्रमिता १० स्तदा तु रंध्र ९ स्तु रक्तो
दशमः सितश्च ॥ ७४ ॥

इत्यर्थः । एषामग्रं तु वेदैश्चतुःकरैस्त्रिकोणं स्यात् । अथवा ते सर्वे ध्वजाः द्विहस्तदीर्घाः विंशत्यंगुलैर्विस्तृताश्चेत्यर्थः ॥ ७३ ॥ ॥ सर्वे इति ॥ अथवा सर्वे ध्वजाः बाहुमात्रदीर्घाः । द्वादशांगुलैर्विस्तृताः दशैव स्युरित्यर्थः । यदा पक्षांतरे दिक्प्रमिताः दशैव कार्यास्तदा रंध्रो नवमो ध्वजः मेघवर्णः दशमः श्वेतश्चेति विशेषः ॥ ७४ ॥

तथेति ॥ अथो पताकाः ध्वजानां च तुल्या दैर्घ्यविस्ताराभ्यामित्यर्थः । तदाकाराः ध्वजाकाराः त्रिकोणादिरूपास्तद्वर्णा पूर्वोक्तवर्णाः स्युरिति शेषः। यत्र ता अपि दशैव तदा रंध्रा नवमी सर्ववर्णा तथा दशम्यपि पंचवर्णा प्रदिष्टा स्यादित्यर्थः । तथाच सुबोधिन्यां ध्वजपताकालक्षणं। ध्वजाः पताका यत्रोक्ताश्चतुर्दशकरा मताः । द्विहस्तविस्तृता वद्धाश्चतुर्हस्ताचलांचलाः । हस्तद्वयेन हीनास्ता मध्यमा अधमास्ततः । मध्यमात्करतो हीना अधमाच्च त्रिसंज्ञकाः । अधमाधमतो हस्तहीनास्ते च करादयः । सप्तहस्ता यदा कार्याः सप्तमांशेन विस्तृताः। द्विहस्तसंमिता वापि विंशत्यंगुलविस्तृताः । यथाविभवतः कार्याः पूर्वाभावे पराः

तथाथो पताकाध्वजानां च तुल्यास्तदाकारवर्णा दशैवापि यत्र । तदा सर्ववर्णा
तु रंध्रा प्रदिष्टा तथा पंचवर्णा दशम्येव च स्यात् ॥७५॥ पताकाश्च ध्वजाश्चैव
दशैवेति विनिश्चितं । सुबोधिनीमतं त्वत्र पद्धत्या च विरुध्यते ॥ ७६ ॥

स्मृताः । प्रकारांतरं तत्रैव । पंचहस्ता ध्वजाः प्रोक्ता विस्तृताश्च द्विहस्तकाः । अथवा बाहुमात्राः स्युः सर्वा विस्तृतिविस्तृताः इति । तथा तत्रैव । इंद्रायुधप्रभा रक्ता धूम्रा कृष्णासितासिता । श्वेता चैव तु मेघाभा रक्ता गौरा क्रमाद्दशेति ॥ ७५ ॥ ॥ पताका इति ॥ ताः पताकाः ध्वजाश्च दशैवेति यद्विनिश्चितं तत्र सुबोधिनीमतं कोटिहोमपद्धत्या सह विरुध्यत इत्यर्थः । तथाच सुबोधिनी । दशदिक्पतिमंत्रैश्च दशदिक्षु यथाक्रमं । ध्वजाः पताकाः संस्थाप्यास्तत्तन्मंत्रैः स्वशाखजैरिति । तथाच पद्धतिः । अनयोः पताके अपि भवत इति केचित् । तत्र मूलं मृग्यं । नच लोकेशवर्णा इति मूलं । तेषां

प्राक्परिगणितत्वात्, ऊर्ध्वं तु ब्रह्मणे देय इति पार्थक्येन गणनाच्चेति ॥ ७६ ॥ अथोत्तमादिमंडपे स्नानमंडपमानं शालिनीवृत्तेनाह ॥ श्रेष्ठेति ॥ पूर्वमंडपादुत्तरस्यां दिशि देवस्नापनार्थं स मंडपः स्यादित्यर्थः । स मंडपः श्रेष्ठे मंडपे तदर्धेन, मध्ये मध्यममंडपे त्र्यंशेनं, अल्पे चतुर्थांशेन पूर्वमंडपापेक्षयेत्यर्थः । तस्मात्स्नानमंडपादुत्तरस्यां तदर्धा स्नानमंडपार्धा तद्वत्कारुशालां प्रकुर्यादित्यर्थः । तदुक्तं हेमाद्रौ कौस्तुभे च । मंडपस्योत्तरे कार्यः स्नानाख्यो मंडपः परः । मंडपस्यार्धमानेन

श्रेष्ठेऽर्धेनाम्न्यं ३ शमानेन मध्ये ह्यल्पे वेदां ४ शेन च स्नापनार्थं । पूर्वात्कुर्यान्मंडपाच्चोत्तरस्यां तस्मादर्धां कारुशालां ततश्च ॥ ७७ ॥ प्रतिष्ठायां द्वयं तच्च प्राच्यां तस्मिंश्च वेदिकाः । तिस्रो हस्तेन दीर्घाः स्युस्तताश्चांघ्रिमितोच्छ्रिताः ॥ ७८ ॥ कुंभैर्गंगांबुपूर्णैः ससुफलसुदलैरावृतं चामरौघै रंभास्तंभैः सपुष्पैः सुसुरभिकुसुमस्त्रग्भिराबद्धकूटं । उल्लोचादर्शचूतद्रुमभवकिसलैः संवृतं विप्रवृंदैः पद्मैश्चांपेयमुक्ताफलकृतजलजैर्भूषयेत्तं समंतात् ॥ ७९ ॥

तदर्धेनाथ वा पुनः । तदुत्तरे कारुशालां स्नानाख्यस्यार्धमानत इति । मात्स्येऽपि । तस्याप्युत्तरतः कुर्यात्स्नानमंडपमुत्तमं । तदर्धेन त्रिभागेन चतुर्थांशेन वा पुनरिति ॥ ७७ ॥ अथास्मिन्मंडपे वेदित्रितयं कुर्यादित्यनुष्टुब्वृत्तेनाह ॥ प्रतिष्ठेति ॥ शिवादिप्रतिष्ठायां तद्द्वयं स्नानमंडपः कारुशाला चेति द्वयं स्यात् । तस्मिन्मंडपे तिस्रो वेदिकाः स्युरित्यर्थः । ताः हस्तेन दीर्घाः तताः विस्तृताश्च अंघ्रिमितेन स्वपादतुल्येन मानेनोच्छ्रिता इत्यर्थः ॥ ७८ ॥ अथ मंडपभूषणं स्रग्धरावृत्तेनाह ॥ कुंभै-

रिति ॥ गंगायाः अंबु पानीयं तेन पूर्णैः कुंभैः सुष्ठु च तानि फलानि तैः सह तानि च सुष्ठु दलानि तैरावृतं समं-
ताद्व्याप्तं । चामराणां वनगोपुच्छानां ओघैः समूहैः सपुष्पै रंभास्तंभैः सुष्ठु सुरभिर्गंधो येषां तानि च कुसुमानि पुष्पाणि
तेषां स्रग्भिर्मालाभिरासमंताद्बद्धः कूटः शिखरं यस्य । कूटोऽस्त्री शिखरं शृंगमित्यमरः । उल्लोचो वितानः आदर्शो दर्पणं
चूतद्रुम आम्रद्रुमस्तदुद्भवानि च तानि किसलानि पल्लवास्तैरावृतमित्यत्राप्यनुवर्तते । अस्त्री वितानमुल्लोच इत्यमरः । अथ
पल्लवः । विसलं किसलं चाथो इति त्रिकांडशेषः । विप्राणां वृंदैः समूहैरावृतं व्याप्तं । पद्मैः कमलैः चांपेयं सुवर्णं मुक्ता-
फलानि मौक्तिकानि तैः कृतानि च तानि जलजानि तैर्मंडपं समंतात्सर्वत्र संभूषयेद्रमणीयं कुर्यादित्यर्थः । स्वर्णं लोहवरं

प्राक्तोऽथ वेदास्त्रिवरांगमर्धेंद्वद्र्यस्त्रिवृत्तानि षडस्त्रि पद्मं ।
कुंडानि चाष्टास्त्र्यथ वात्र सर्वाण्याम्नायकोणानि च वर्तुलानि ॥ ८० ॥

चाग्निबीजं चांपेयमित्यपीति त्रिकांडशेषः । सिद्धांतशेखरे । चूतपल्लवमालाढ्यं वितानैरुपशोभितं । विचित्रवस्त्रसंछन्नं
पट्टकूलादिभूषितं । सफलैः कदलीस्तंभैः क्रमुकैर्नारिकेलजैः । फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि । भूषितं मंडपं कुर्याद्र-
त्नपुष्पसमुज्ज्वलमिति ॥ ७९ ॥ अथ कुंडानि वक्तुं तेषां स्थानान्याकारांश्चेंद्रवज्रावृत्तेनाह ॥ प्राक्त इति ॥ अथ कुंडानि
पूर्वदिशमारभ्य वक्ष्यमाणानि कुंडानि । तानि पूर्वस्यां वेदास्रं । वह्निदिशि वरांगं योनिकुंडं । दक्षिणस्यामर्धेंदु अर्धचंद्रं । निर्ऋतौ
अद्र्यस्त्रि त्रिकोणं । प्रतीच्यां वृत्तं । वायव्यां षडस्त्रि । उदीच्यां पद्मं पद्माकारं । ईशान्यामष्टास्त्रीति । अथवा सर्वाणि आम्नाय-

कोणानि चतुरस्राणि । अथवा वर्तुलानि च भवंतीति शेषः । अस्रशब्दः कोणवाची । अस्रः कोणे कचे पुंसीति मेदिनी-
कोशात् । शारदातिलके । अष्टास्वाशासु रम्याणि कुंडान्येतान्यनुक्रमात् । चतुरस्रं योनिरर्धचंद्रं त्र्यस्रं च वर्तुलं । षडस्रं
पंकजाकारमष्टास्रं तानि नामतः इति । पंचरात्रे । सर्वाणि तानि वृत्तानि चतुरस्राणि वा सदेति ॥ ८० ॥ अथाचार्यकुंड-
स्थलं पंचकुंडीपक्षं चोपजातिवृत्तेनाह ॥ इंद्रेति ॥ इंद्रश्च ईशानश्च तयोर्दिशोर्मध्ये अब्धिकोणं चतुरस्रं अथवा वृत्तं स्या-
दित्यर्थः । एतद्गुरोः कुंडमाचार्यकुंडमिति यावत् । तदाचार्यकुंडं पंचकुंडीपक्षे ईशदिगीशानी तस्यां स्थितं भवतीत्यर्थः । वि-

इंद्रेशमध्ये ह्यथवाब्धिकोणं वृत्तं गुरोः स्यात्खलु कुंडमेतत् । तत्पंचकुंड्यां भवती-
शदिक्स्थं विदिक्स्थकुंडैस्तु विनेषु ५ कुंडी ॥ ८१ ॥ यदैककुंडपक्षोऽस्ति तदा
प्राच्यामथापि वा । प्रतीच्यामुत्तरस्यां वा श्रीशंभुदिशि वा कुरु ॥ ८२ ॥

दिक्स्थकुंडैः विदिशः आग्नेयीनैर्ऋतीवायव्यैशान्यः तासु कुंडानि योनित्र्यस्रषडस्राष्टास्राणि तैर्विना इषुकुंडी पंचकुंडी स्या-
दिति । तदुक्तं सिद्धांतशेखरे । पुरंदरेशयोर्मध्ये वृत्तं वा चतुरस्रकं । तदाचार्यविनिर्दिष्टमिति । शारदातिलकेऽपि । आचा-
र्यकुंडं मध्ये स्याद्गौरीपतिमहेंद्रयोरिति । पंचकुंडी नारदीये । यत्रोपदिश्यते कुंडचतुष्कं तत्र कर्मणि । वेदास्रमर्धचंद्रं च
वृत्तं पद्मनिभं तथा । कुर्यात्कुंडानि चत्वारि प्राच्यादिषु विचक्षणः । पंचमं कारयेत्कुंडमीशदिग्गोचरं बुध इति ॥ ८१ ॥ अथैक-
कुंडपक्षे कुंडस्थलान्यनुष्टुब्वृत्तेनाह ॥ यदेति ॥ यदैककुंडपक्षः स्वीकृतस्तदा प्राच्यां प्रतीच्यां वोत्तरस्यां श्रीशंभुदिशि ऐशान्यां

वा कुर्वित्यर्थः । तदुक्तं सोमशंभौ । एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुध इति । क्रियासारे । उत्तरस्या भवेत्कुंडं वृत्तं वा चतुरस्रकमिति । तथा । भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे तथैव च । सदा होमे तथा शांतावेकं वरुणदिग्गतमिति ॥ ८२ ॥ अथ कर्मपरत्वेनैककुंडस्य मध्ये विधानमार्याछंदसाह ॥ एकमिति ॥ एकं चेत् कुंडं शांतौ शांतिकर्मणि जपांगहवनेषु । जपांगमित्युपलक्षणं । वेदपारायणांगहवननवशतसहस्रचंड्यादिहवनेषु तथैकादशिनीमारभ्य लघुरुद्रमहारुद्रातिरुद्रहवनेषु मध्ये मंडपमध्ये कार्यं तदेव शुभदमित्यर्थः । ग्रहशांतिमुपक्रम्य वसिष्ठः । कुंडं तन्मध्यभागे तु कारयेच्चतुरस्र-

एकं कुंडं शुभदं मध्ये शांतौ जपांगहवनेषु । आरभ्यैकादशिनीं लघुमहदति-
रुद्रहवनविधौ ॥ ८३ ॥ शांतिस्तंभनसिद्धिभद्रयशसां कृत्ये तु वेदास्रकं भोगा-
कर्षणपुत्रकृद्भगमथो वश्ये च शांतौ मृतौ । अर्धेंद्वाभमथारिनाशनविधौ द्वेषे
तथाऽऽकर्षणे त्र्यस्रि स्यादथ वश्यपुष्टिकरणे संपत्तिशांत्योर्वृतिः ॥ ८४ ॥

कमिति । तथा मंडपे च मध्यभागे कुंडं कुर्यादिति रुद्रपद्धत्यां श्रीमद्भट्टनारायणचरणाः ॥ ८३ ॥ अथ कामनापरत्वेन तानि शार्दूलविक्रीडितवृत्ताभ्यामाह ॥ शांतीति ॥ शांत्याद्युक्तकृत्येषु चतुरस्रं स्यात् । भोगादित्रितये भगं योनिकुंडं स्यात् । अथो वश्यादित्रितये अर्धेंद्वाभमर्धचंद्रं । अथ रिपुनाशादित्रितये त्र्यस्रि कुंडं स्यात् । अथ वश्यादिचतुष्टये वृतिर्वलयं स्यात् ॥ ८४ ॥

शस्त्रिवति ॥ शत्रूच्चाटनादिविषये अंगास्रकं षडस्त्रि स्यात् । अथ पुष्ट्यादि सर्वाप्तिपर्यंतं पद्मं स्यात् । तथा योगार्थादिद्वितये गजास्रमष्टास्त्रि स्यात् । गुरुकुंडमाचार्यकुंडं संपत्कृत्स्यात् । अत्र शरास्त्रि तु भूतादिदोषहृदित्यर्थः । तदुक्तं जयपृच्छाधिकारे । शांतिके चतुरस्रं स्याद्वश्ये चैवार्धचंद्रकं । षट्कोणं मारणे चैव स्तंभने च विशेषतः । आकर्षणे त्रिकोणं स्याद्वर्तुलं चाभिचारिके । मानसिद्धिप्रजननं पद्मं कुंडं न संशयः । पुत्रदं योनिकुंडं स्यादष्टास्रं चैव मुक्तिदं । पंचास्रं भूतदोषघ्नं सप्तास्रमभिचारहृत् । उत्तरे शांतिकं कुर्यात्स्तंभनं चैव पूर्वतः । मारणं दक्षिणे प्रोक्तं वश्यं चैव तु पश्चिमे । आग्नेय्यां दायमुलाद्यं

शत्रूच्चाटनमारणादिविषये स्यात्स्तंभनेऽगास्रकं पद्मं पुष्टिधनागमाद्य-
गदकृद्वश्यार्थमानप्रदं । सर्वाप्तौ च तथा गजास्रमपि तद्योगार्थमु-
क्तिप्रदं संपत्कृद्गुरुकुंडमत्र तु शरास्त्रि स्याच्च भूतादिहृत् ॥ ८५ ॥

विद्वेषं नैर्ऋतेन तु । उच्चाटनं च वायव्ये ईशान्ये सर्वसिद्धिदमिति । सिद्धांतशेखरेऽपि । ऐंद्र्यां स्तंभे चतुष्कोणमग्नौ भोगे भगाकृति । चंद्रार्धं मारणे याम्ये द्वेषे निर्ऋतित्रिकोणकं । वारुण्यां शांतिके वृत्तं षडस्रयुच्चाटनेऽनिले । उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्त्रि मुक्तिदमिति । पिंगलामते । कुंडं कुशेशयाकारमुत्तरे वश्यकर्मणि । षडस्रयुच्चाटने वायात्रर्धेंदु मारणे यमे । वेदास्रं स्तंभने प्राच्यामाकर्षेऽग्नौ भगाकृति । वारुण्यां शांतिके वृत्तमीशे त्वष्टास्त्रि मुक्तिदमिति । सिद्धांतशेखरे । योन्याख्यमुच्यते कुंडमाग्नेय्यामुत्तरामुखं । प्रजावृद्धौ च तापे स्यादर्धचंद्रमथोच्यते । याम्ये तन्मारणे शस्तमुत्तराभिमुखं

तथा । निर्ऋते त्र्यस्रि कुंडं स्याद्विद्वेषे पूर्ववक्रकमिति । अन्यत्रापि । यशः श्रेयस्तथा शांतिश्चतुरस्रेण सिध्यति । भगाकारेण चाकृष्टिः शांतिः स्यादर्धचंद्रके । त्रिकोणे रिपुनाशः स्यात्संपत्पुष्टिश्च वर्तुले । उच्चाटनं तु षट्कोणे वित्तारोग्यं च पंकजे । अष्टास्रे योगसिद्धिः स्यादाचार्ये सर्वसंपद इति परशुरामः । अत्र सर्वत्रादिपदेन वृष्टिदं रोगनाशनमित्यादि तारतम्येन फलान्यूह्यानि ॥८५॥ अथ ब्राह्मणादिपरत्वेन कुंडान्यनुष्टुब्वृत्तेनाह ॥ वेदेति ॥ वेदास्रं चतुरस्रं वृत्तमर्धेंदु अर्धचंद्रं रामास्रं त्र्यस्रं क्रमेण विप्रक्षत्रियवैश्यशूद्रविषयेषु स्युः । अथवा सर्वेषां चतुरस्रं वृत्तं वेति । योषितां स्त्रीणां तु विशेषतो योन्याका-

वेदास्रं वृत्तमर्धेंदु रामास्रं ३ ब्राह्मणादिषु । वृत्तं वाब्ध्यस्रि सर्वेषां भगाभानि तु
योषिताम् ॥८६॥ वेद्याः सकाशादिह वाष्टदिक्षु कोष्ठस्य मध्यः सहि कुंडमध्यः ।
स्यान्मेखलांतं तु सपादहस्तं पादं त्रिचंद्रां १३ गुलमंतरं वा ॥ ८७ ॥

राणीत्यर्थः । तदुक्तं शारदातिलके । विप्राणां चतुरस्रं स्याद्राज्ञां वर्तुलमिष्यते । वैश्यानामर्धचंद्राभं शूद्राणां त्र्यस्रमीरितं । चतुरस्रं तु सर्वेषां केचिदिच्छंति सूरय इति । पंचरात्रे । सर्वाणि तानि वृत्तानि चतुरस्राणि वा सदेति । सनत्कुमारः । स्त्रीणां कुंडानि विप्रेंद्र योन्याकाराणि कारयेदिति ॥ ८६ ॥ अथ कुंडवेद्योरंतरमिंद्रवज्रावृत्तेनाह ॥ वेद्या इति ॥ वेद्याः सकाशादष्टसु दिक्षु अष्टकोष्ठेषु यः कोष्ठमध्यः अथवा वेद्याः सकाशान्मेखलांतं सपादहस्तमथवा वेद्याः पादं वा त्रिचंद्रांगुलं त्रयोदशांगुलमंतरं स्यादित्यर्थः । एवमंतरं ज्ञात्वा कुंडानि कुर्यादिति भावः । तदुक्तं शारदातिलके । प्राक्प्रोक्ते मंडपे विद्वान्वे-

दिकाया बहिस्त्रिधा । क्षेत्रं विभज्य मध्येंशे पूर्वादि परिकल्पयेत् । अष्टास्वाशासु कुंडानि रम्याकाराण्यनुक्रमादिति । एव-
मेव कुंडकल्पलतायां कुंडदीपके कुंडोद्द्योते च । वेदीपादांतरं त्यक्त्वा कुंडानि नव पंच वेति सोमशंभुः । त्यक्त्वा वेदी-
चतुर्भागं कुंडानि नव पंच वेति क्रियासारे । कुंडवेद्यंतरं चैव सपादकरसंमितमिति नारदीयाच्चेति । वसिष्ठसंहितायां ।
त्रयोदशांगुलं त्यक्त्वा वेदिकायाश्चतुर्दिशमिति । वेदीभित्तिं परित्यज्य त्रयोदशभिरंगुलैरिति च । सपादहस्ताद्यंतरपक्षे
कुंडमध्यकेंद्राणि समानानि न भवंतीति ॥ ८७ ॥ अथ होमानुसारेण कुंडमानं भुजंगप्रयातोपजातिकागीत्यैंद्रवज्रावृत्तै-
राह ॥ सहस्र इति ॥ सहस्रहवने कर्तव्ये हस्तमात्रं कुंडं कर्तव्यं । तथाऽयुते दशसहस्रे द्विहस्तं । ततोऽयुतादारभ्य दश-

सहस्रेऽयुते हस्तमात्रं द्विहस्तं ततो दि१०ग्गुणे हस्तयुग्मस्य वृद्धिः ।
धराहस्तकं लक्षहोमे ततोऽथ करर्ध्या प्रकुर्यात्तु दि१०ग्लक्षकांतं ॥ ८८ ॥

गुणे हवने हस्तद्वयवृद्धिः कार्या । तथाहि लक्षे चतुर्हस्तं दशलक्षे षड्ढस्तं कोटौ अष्टहस्तमित्यर्थः । अथवा लक्षहोमे धराह-
स्तकं एकहस्तं ततो लक्षात्प्रतिलक्षं हस्तस्य ऋद्धिर्वृद्धिस्तया दशलक्षकांतं कुंडं प्रकुर्यादित्यर्थः । तदुक्तं भविष्ये । मुष्टिमात्रं
शतार्धे स्याच्छते चारत्निमात्रकं । सहस्रे त्वथ होतव्ये कुंडं कुर्यात्करात्मकं । द्विहस्तमयुते तच्च लक्षहोमे चतुःकरं । दश-
लक्षमिते होमे षट्करं संप्रचक्षते । अष्टहस्तात्मकं कुंडं कोटिहोमे तु नाधिकमिति । एकहस्तमितं कुंडं लक्षहोमे विधीयते ।
लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेदिति शारदातिलके ॥ ८८ ॥

लक्षार्धेति ॥ लक्षार्धे पंचाशत्सहस्रे तत्कुंडं त्रिकरं प्रशस्यते युक्तमिति यावत् । तथा लक्षे चतुर्हस्तं प्रयुते दशलक्षे इषुहस्तं पंचहस्तं विंशतिलक्षे द्वाभ्यां गुणितास्त्रयः षडिति यावत् षड्ढस्तं । पंचाशल्लक्षे सप्तकरं विदः पंडिताः विदुः कथयामासुरित्यर्थः । अथवेति सर्वैः सह विकल्प्यते । सिद्धांतशेखरे । लक्षार्धे त्रिकरं कुंडं लक्षहोमे चतुःकरं । कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमात् । षड्ढस्तं लक्षविंशत्यां कोट्यर्धे सप्तहस्तकमिति ॥ ८९ ॥ ॥ अयुतेति ॥ अथानंतरं अयुते दशसहस्रे लक्षे प्रयुते दशलक्षे कोटौ अर्बुदे दशकोटौ च क्रमेण एकेन हस्तेन द्वाभ्यां तथैव चतुर्भिः षड्भिरष्टभिः करैः-

लक्षार्धके तत्त्रिकरं प्रशस्यते लक्षेऽब्धिहस्तं प्रयुतेषु हस्तकं । द्विघ्नत्रिहस्तं नखलक्षकेऽथवा खपंच५०लक्षेऽश्वकरं विदो विदुः ॥ ८९ ॥ अयुते लक्षे प्रयुते कोटौ वाप्यर्बुदे तथैव करैः । एकेनैव द्वाभ्यां चतुर्भिरथ षड्भिरष्टभिस्तानि ॥ ९० ॥ कोट्याहुतौ स्याद्दतुभू१६करं तदाशा-१०करं वापि विशिष्यतेऽत्र । उक्तेषु पक्षेष्वधिकोनकेषु त्रैराशिकेणैव विधेयमेतत् ॥ ९१ ॥

स्तान्युक्तानि कुंडानि वा स्युरित्यर्थः । सिद्धांतशेखरे । तथाऽयुते च नियुते प्रयुते कोटिसंमिते । अर्बुदे च करैः कुंडं चंद्रद्व्यब्ध्यंगनागकैरिति ॥९०॥ ॥ कोट्याहुताविति ॥ कोटिहवने ऋतुभूकरं षोडशहस्तं । अथवा आशाकरमपि विशेषेण शस्यते युक्तमित्यर्थः । तथाच स्कांदे । कोटिहोमे चतुर्हस्तं चतुरस्रं समंततः । योनिवक्रद्वयोपेतं तदप्याहुस्त्रिमेखलमिति । अत्र कोटिहोमपद्धतौ समंततश्चतुर्हस्तोक्त्या षोडशहस्तमिति रामकृष्णभट्टाः । मयूखकल्पलतादयोऽप्येवमेवाहुः ॥ उक्तेष्विति ॥

ये पक्षा उक्तास्तेष्वधिकेषु ऊनेषु वा सत्सु त्रैराशिकेणैव एतत्कुंडं विधेयमित्यर्थः । तथाच रुद्रप्रसादे । उक्तहोमाधिकोने तद्धोमेऽधिकोनमंगुलैः । यथोक्तफलभाक्तेन कर्ता स्यादन्यथान्यथेति । विश्वकर्मापि । आदौ कुंडं समुत्पाद्यमाहुतीनां यथोदितं । एतन्मध्ये विभागं यत्सर्वं तदनुपातत इति ॥ ९१ ॥ कल्पेति ॥ कुंडकल्पद्रुमनामग्रंथः एवं पूर्वोक्तं त्रैराशिकादिकरणं युक्तं सदिति जगाद । अन्ये बुधाः न इति कथयंति । तत्र कुंडव्यवस्थातु द्रव्यस्य होमद्रव्यस्य स्थूलसूक्ष्ममानात् स्वबुद्ध्यैव सुधीभिः कार्या कल्प्येत्यर्थः । इदं सर्वं सुविस्तृतं श्रीमत्तातचरणकृतकुंडार्कपद्मिनीटीकायां

कल्पद्रुरेवं निजगाद युक्तं नेतीति चान्ये कथयंति संतः । कुंडव्यवस्था पृथुसूक्ष्ममाना-
द्द्रव्यस्य कार्या स्वधिया सुधीभिः ॥ ९२ ॥ यन्मंडपे यत्करकुंडमिष्टं ज्ञात्वैव कुंडादिक-
मारभेत । न्यूनेऽथ कुंडेऽप्यधिको विधेयो न्यूनो न होमस्त्वधिके प्रशस्तः ॥ ९३ ॥

कोटिहोमपद्धतौ च द्रष्टव्यं ॥ ९२ ॥ ॥ यदिति ॥ यन्मंडपे यद्धस्तादिपरिमितमंडपे यत्करं यद्धस्तादि यथेष्टं कुंडं ज्ञात्वा कुंडादिकमारभेत प्रारंभं कुर्यात् । यथाष्टहस्तदशहस्तमंडपे एकहस्तात्मकनवकुंडानां न समावेशः अतस्तत्र पंचकुंड्येव कार्या न नवकुंडी । एवं द्विहस्तादिकुंडादावपि ज्ञात्वा कुंडानि कुर्यादिति भावः । अथ न्यूने न्यूनमाने कुंडे अधिकः अधिकसंख्याकहोमो विधेयः यथा एकहस्तकुंडे एकोनायुतपर्यंतं होमः तद्वन्न्यूनसंख्याकहोमः अधिकमानके कुंडे न प्रशस्तः । उक्तंच कोटिहोमपद्धतौ । न्यूनसंख्योदिते कुंडेऽधिको होमो विधीयते । अनुक्तकुंडो न्यूनस्तु नाधिके

शस्यते क्वचिदिति । न्यूनसंख्येऽपि स्थूलद्रव्यपरिमाणाधिक्यादौ अधिकं मानमपि कुंडं भवत्येव । अर्थात्परिमाणमित्युक्तेः । अतएवोक्तं पूर्वश्लोके कुंडव्यवस्थापृथुसूक्ष्मेत्यादि ॥९३॥ अथ एकोनविंशतिभिर्गीतिभिश्चतुरस्रादिनवकुंडीकरणप्रकारमाह ॥ दक्षेति ॥ चतुरस्रवृत्तव्यासः ३३।७४ अस्यार्धं १६।७६।५ अनेन वृत्ते कृते तस्मिन्नष्टसु दिक्षु चिह्नितेषु सत्सु यः वृत्तदक्षोंऽसस्तस्मादारभ्य आदक्षश्रोणिपर्यंतं तथा सव्यांसतोऽर्थाद्वृत्तवामकटिस्तस्यां लग्नं । एवं बाहुद्वयस्पृष्टमन्यत्सूत्रं तथा कटिद्वयस्पृष्टं एतैश्चतुर्भिः सूत्रैर्वेदकोणकं चतुरस्रं कुंडं स्यादित्यर्थः । यत्तु चतुरस्रमिदं प्रोक्तं सर्वकुंडेषु कारणमित्यादिवचनबलेऽपि रघुवीरदीक्षितैः कुंडार्कटीकायां चतुरस्रप्रकृतीनि सर्वकुंडानि ये व्याचख्युस्तेषां भुजसाम्यं क्वापि नास्तीति

दक्षांसादादक्षश्रोणिं सव्याच्च सव्यकटिलग्नं । बाहुद्वयकटियुग्मस्पृक्सूत्रैर्वेदकोणकं कुंडं ॥९४॥

चतुरस्रपूर्वस्वरूपं




स्पष्टमित्युक्तं तच्च चतुरस्रप्रकृतौ कुंडकरणे बहुप्रयासस्तथा त्रिभुजादौ क्वचिद्भुजसाम्याभावःक्वचित्फलेऽप्यंतरं दृश्यते तथापि वृत्तकुंडादिषु वृत्तं विना गतिरेव नास्तीति । वृत्तप्रकृतौ तु स्वल्पायासेन कुंडसिद्धिर्भुजसाम्यं फलेऽप्यंतराभावोऽतस्तैरुक्तं सुवचमिति । नच शारदातिलकादौ प्रकृतिचतुरस्रमेवोक्तं मात्स्यादावप्येवं । प्रकृतिवृत्तं तु क्वापि न श्रूयत इति वाच्यं । शारदातिलकादौ तु कुंडसिद्धौ तात्पर्यं न सूत्रपातादावित्यनेकग्रंथकाराणामनेकोक्तिभिः स्पष्टत्वात् । अनेनैव प्रकारेण कुंडं कुर्यादिति मानाभावात् । कुंडार्कादौ सर्वकुंडप्रकृ-

चतुरस्रसिद्धस्वरूपं



तिकत्वेन वृत्तस्यैव विधानात् । वचनस्य क्षेत्रफलांशे विनियोगाच्चेति दिक् ॥ अथ फलानयनं ॥ व्यासः ३३।७।५ अयं त्रिबाणाष्टयुगाष्टभिः ८४८५३ एभिर्निघ्नो जातः २८८१०२४ अयं खखखाभ्राकैः १२०००० रेभिर्भक्ते लब्धो भुजाः २४।०।०।४ समश्रुतिचतुरस्रे भुजकोटिघातः फलं ५७६।३ अधिकेन ध्वजायसिद्धिः । उक्तंच । स्थापने सर्वकुंडानां ध्वजायः सर्वसिद्धिद इति ॥ ९४ ॥ अथास्मिन्नेव चतुरस्रेऽश्वत्थपत्राकृति योनिकुंडमाह ॥ सिद्ध इति ॥ चतुरस्रे सिद्धे सति अस्मिन्नेव वृत्ते वामात्पार्श्वतः परिधिबाह्ये चतुरस्रवृत्तव्यासस्य भूधृतिलवं एकाशीत्युत्तरशततमांशं वर्धय तस्माद्व-

सिद्धे चतुरस्रेऽस्मिन्वृत्ते वामाच्च पार्श्वतो बाह्ये । व्यासस्य भूधृति १८१
लवं वर्धय तस्माद्गुणद्वयं सुसमं ॥९५॥ वेदास्रपुच्छास्यस्पृक्कर्णदलं व्यास-
वृत्तदलयुग्मं । पुच्छास्यदक्षपार्श्वस्पृष्टं स्याद्बोधिपत्रवद्योनिः ॥ ९६ ॥

र्धितदेशात् गुणद्वयं सूत्रद्वयं सुसमं यथा स्यात्तथा वेदास्रस्य चतुरस्रस्य पुच्छं च आस्यं च स्पृशतीति एतादृशं गुणद्वयं देहीति शेषः ॥ ९५ ॥ ततश्चतुरस्रस्य कर्णदलमेव व्यासस्तेन वृत्तदलस्य युग्मं युगुलं चतुरस्रस्येति देहलीदीपन्यायेनोभयतः संबंधस्तेन चतुरस्रस्यैव मुखपुच्छदक्षपार्श्वे परिधिसंलग्नं कार्यं तेन बोधिपत्रवदश्वत्थपत्रसदृशी योनिः योनिकुंडं स्यादित्यर्थः ॥ अथ फलानयनं ॥ वृत्तव्यासः ३३।७।४ अस्याब्ध्यस्रिज्या २४ इयं व्यासादूना ९।७।४ अस्यार्धं ४।७।६ अनेन युक्ता

कुंडमध्यज्या २८।७।६ अथ व्यासस्य भूधृतिलवः ०।१।४ अनेन सहिता युक्तज्या २९।१।२। अयमेव लंबः दक्षज्यार्धं भूम्यर्धं १२ लंबगुणमित्यादिना त्र्यस्रद्वयफलं ३४९।७। अथ वृत्तदलद्वयफलं। तत्र चतुरस्रकर्णार्धं व्यास एव १६।७।६ अस्य वर्गः २८८।१।५ एकादशगुणितः ३१७०।२ शक्रहृतः २२६।३।५ संपूर्णं वृत्तफलमिदं अतो वृत्तार्धद्वयफलमपीदमेव द्वयो-

योनिकुंडसाध्यरूपं



दक्षात्पार्श्वात्परिधिप्राप्ते व्यासार्धकेन चिह्ने द्वे ।
कुर्याद्वामात्पार्श्वाद्देये सूत्रे च चिह्नसंलग्ने ॥ ९७ ॥

योनिकुंडसिद्धरूपं



र्योगे संपूर्णं योनिकुंडफलं ५७६।२।५ अधिकं ध्वजायः ॥ ९६ ॥ अथ प्रकारांतरेण योनिकुंडमाह ॥ दक्षादिति ॥ दक्षपार्श्वमारभ्येत्यर्थः । परिधिवृत्तरेखा तस्यां प्राप्ते लग्ने व्यासार्धेन १५।१ अनेन द्वे चिह्ने कर्तव्ये उभयत इति शेषः । तथा वामात्पार्श्वाच्चिह्नसंलग्ने द्वे सूत्रे देये यथाक्रमं चिह्नद्वयसंलग्ने इति भावः ॥ ९७ ॥

मध्ये तयोरग्रे लग्नं अन्यत्सूत्रं देयं एवं त्रिकोणकं तस्याधः दक्षिणपार्श्वेश्च चिह्नं च ते एव ज्ये यस्येत्येतादृशं गोलदलयुग्मं वृत्तार्धद्वयं तेन युक् योनिर्वा भवतीत्यर्थः ॥ अथ फलानयनं ॥ व्यासः ३०।२ अयं त्रिद्व्यंकाग्निनभश्चंद्रै १०३९२३ रेभिर्निघ्नः ३१४३६७०६ खखखाभ्रार्क १२०००० संभक्ते लब्धरूत्र्यस्रभुजः २६।१।४ एतन्मितत्रिभुजैः समभुजं त्रिकोणमेकं तथाधिककोणं लघुत्रिभुजमेकं तत्र बृहत्त्रिभुजे चतुर्थांशोनवृत्तव्यास एव लंबः २२।५।४ एवं लघुत्रिभुजे व्यासचतुर्थांशो




मध्ये तु चिह्नयुग्मस्पृष्टं चान्यत्ततोऽपि दक्षिणतः ।
वामान्यपार्श्वचिह्नज्यगोलदलयुग्मयुक्त योनिर्वा ॥ ९८ ॥




लंबः ७।४।४ द्वयोरूत्र्यस्रयोर्भूमिर्बृहत्त्रिभुजभुजः अस्यार्धं भूम्यर्धं १३।०।६ इदं बृहल्लंबेन गुणितं २९७।०।४ तथा लघुलंबेन च ९९।०।१। अथ वृत्तार्धफलं तत्र लघुत्र्यस्रभुजो व्यास एव १५।१ अस्य वर्गः २२८।६।१ अयं भनवाग्निभि ३९२७ रेभिर्निघ्नः ८९८३६२ अयं पंचसहस्रेण ५००० भक्ते लब्धं वृत्तार्धद्वयफलं १७९।५।२ त्रयाणां योगे सर्वं क्षेत्रफलं ५७६।०।१ अधिकं ध्वजायः ॥ ९८ ॥

अथार्धचंद्रकुंडमाह ॥ केंद्रादिति ॥ केंद्रान्मध्यादुदग्दिशि गुणांघ्रौ व्यासचतुर्थांशे पूर्वोक्तव्यासेन वृत्तं कुर्यात् तस्मिन्वृत्ते पुच्छं च आस्यं च ते स्पृशतीति एतादृशी ज्या तस्याः दानेन अर्धचंद्रं कुंडं भवतीत्यर्थः ॥ अथ फलानयनं ॥ व्यासः ३८।२।३ अस्य वर्गः १४६६।५।२। भनवाग्निनिघ्नः ५७५९५५५९।१ पंचसहस्रभक्ते लब्धं सर्ववृत्तफलं ११५२।०।०।२ अस्यार्धमर्धचंद्रफलं ५७६।०।०।१ लिक्षाधिकं ध्वजायः ॥ ९९ ॥ अथ त्र्यस्रकुंडमाह ॥ पुच्छादिति ॥ पुच्छादारभ्य परि-

अर्धचंद्रपूर्वरूपं




केंद्रादुदग्गुणांघ्रावुक्तव्यासेन गोलके तु कृते ।
तस्मिन्पुच्छास्यस्पृग्ज्यादानेनार्धचंद्रकुंडं तत् ॥ ९९ ॥
पुच्छात्परिधिप्राप्ते कुर्याद्व्यासार्धकेन चिह्ने द्वे ।
मुखतोऽकस्पृक्सूत्रे मध्येन्यच्चिह्नलग्नमत्र्यस्रि ॥ १०० ॥

अर्धचंद्रसिद्धरूपं



धिप्राप्ते लग्ने उक्तव्यासार्धेन द्वे चिह्ने लक्षणे कुर्यात् । तथा मुखतः वक्रादारभ्य कृतचिह्नस्पृष्टे द्वे सूत्रे देये इति शेषः ॥ तथा तयोर्मध्ये चिह्नद्वयलग्नं अन्यत्सूत्रं देयं । तेन अत्र्यस्रि त्र्यस्रि स्यादित्यर्थः ॥ अथ फलानयनं ॥ व्यासः ४२।१ अस्य त्रिघ्नंकेत्यादिना भुजः ३६।४ त्रयाणां तुल्यत्वाद्भुजार्धमेव भूम्यर्धं १८।२ अत्र चतुर्थांशोनवृत्तव्यासो लंबः ३१।४।६ अनेन गुणितं भूम्यर्धं फलं ५७६।४।५ अधिकं ध्वजायः ॥ १०० ॥

अथ प्रकारांतरेण त्र्यस्रमाह ॥ केंद्रादिति ॥ केंद्रात्कोष्ठमध्यात्प्रत्यक् पश्चिमदिशि स्वीयसप्तमांशेन ऊना या त्रिज्या व्यासार्धं तन्मितप्रदेशे सार्धषट्त्रिंशदंगुलव्यासेन वृत्तं कुर्यात् । तद्वृत्तस्य यत्पार्श्वयुग्मं तस्मात् उक्तव्यासः षट्त्रिंशदंगुलस्तेन

केंद्रात्प्रत्यक्स्वहयांशोनत्रिज्यामितप्रदेशे च । उक्तव्यासेन वृत्तिं तत्पार्श्वाभ्यां तिमिं च पूर्वस्यां ॥१०१॥

प्रथमत्रिकोणपूर्वरूपं




प्रथमत्रिकोणसिद्धरूपं



द्वितीयत्रिकोणस्य पूर्वरूपं




द्वितीयत्रिकोणसिद्धरूपं



द्विगुणेन पूर्वस्या दिशि मत्स्यं कुर्यात् । तत्तु वृत्तद्वयकरणेन भवति तस्य वक्त्रान्मुखात् सूत्रद्वितयं प्रथमवृत्तपार्श्वद्वयस्पृक् लग्नं कुर्यात् । तेन त्र्यस्रं त्र्यस्रकुंडं वेति पूर्वत्र्यस्रेण विकल्पः भवतीत्यर्थः ॥ अथ फलानयनं ॥ प्रथमवृत्तव्यासः ३६ । ४

स्वसप्तांशोनत्रिज्या १५।५।१ केंद्रादेतन्मितदेशे उक्तव्यासेन वृत्ते कृते वृत्तद्वयसंपातसकाशात्पूर्ववृत्तपार्श्वस्पृक् सूत्रमानं ३६।४ पूर्ववृत्तव्यासार्धं भूम्यर्धं १८।२ अनयोर्वर्गांतरमूलं लंबः ३१।४।६ लंबगुणं भूम्यर्धं फलं ५७६।४।६ ॥ १०१ ॥ अथ वृत्तकुंडमाह ॥ ॥ पश्चादिति ॥ वेद्याः पश्चात्पश्चिमदिशि उक्तव्यासार्धेन वृत्तं कुंडं कुर्वित्यर्थः ॥ अथ फलानयनं ॥ व्यासः २७।०।६ अयं भनवाग्निनिघ्नः खबाणसूर्यैर्भक्तो लब्धो वृत्तपरिधिः ८५।०।५ वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलमित्यादिना फलं तत्र व्यासपादः ६।६।१।४ अयं परिधिना गुणितः जातं फलं ५७६।२ अधिकं ध्वजायः ॥ अथ षडस्रमाह ॥ पार्श्वादिति ॥

तेन त्र्यस्रि स्याद्वा वेद्याः प्रत्यक्तु वृत्तकुंडं स्यात् । उक्तव्यासद्विगुणस्तृत्या
कुर्यात्ततश्च तद्वक्रात् ॥ १०२ ॥ गुणयुग्मं तन्मध्येऽन्यत्सूत्रं पूर्ववृत्तपार्श्व-
स्पृक् । पार्श्वाद्विस्तृतिदलमितषड्भिर्ज्याभिः षडस्रमतिसाधु ॥ १०३ ॥

पार्श्वादिति सामान्योक्त्या कस्मादपि पार्श्वाद्विस्तृतिर्व्यासस्तस्य दलं अर्धं तन्मिताभिः षड्भिर्ज्याभिरतिसमीचीनं षडस्रं स्यादित्यर्थः ॥ अथ फलानयनं ॥ व्यासः २९।६ षडस्रे तु व्यासार्धमेव ज्या १४।७ अस्यार्धं ७।३।४। अथ व्यासार्धवर्गः २२१।२।१ भुजार्धवर्गः ५५।२।४ अनयोरंतरं १६५।७।५ अस्य मूलं १२।७।३ इदमेव लंबः तेन ज्यार्धे गुणिते जातमेकत्र्यस्रफलं ९६।०।७ इदं षड्गुणं सर्वं क्षेत्रफलं ५७६।५।२ अधिकं ध्वजायः ॥ १०२ ॥ १०३ ॥

अथ पद्मकुंडमाह ॥ चिह्नेति ॥ उक्तव्यासवृत्तेऽष्टसु चिह्नेषु द्वयोर्द्वयोर्मध्यतः युगभुजं चतुर्भुजं तयोर्युगलं युग्मं समकोणं विधेहि कुरु इति कृतेऽष्टत्र्यस्राणि भवंति तेषु प्रतित्र्यस्रे यौ कर्णौ तयोर्दलमर्धं ज्या ययोरेतादृशं

चिह्नद्वितयांतरितो युगभुजयुगलं विधेहि समकोणं ।
त्र्यस्राष्टकेषु कुर्यात्प्रतिकर्णदलज्यचापयुगलं तत् ॥ १०४ ॥

वृत्तकुंडस्य पूर्वरूपं सिद्धरूपं चैकं




षडस्रपूर्वरूपं




षडस्रसिद्धरूपं



चापयोर्धनुषोर्युगं युग्मं कुरु । तद्युग्मं अंतर्बाह्ये च ज्या ययोस्त्र्यस्रस्यांतरे त्र्यस्रबाह्ये च ज्या ययोरेतादृशं चापयुग्मं कुर्वित्यर्थः । तेन बहुशोभायुक्तं पद्मं पद्मकुंडं भवतीत्यर्थः ॥ तस्मिन्पद्मे रसांशैः षडंगुलैः कर्णिकापद्ममध्यप्रदेशः । तस्याः

षडंगुलैः पिंडः उच्चता व्यासो विस्तृतिश्च स्यातां । तद्बहिर्द्वादशांशैः केसराणां वृत्तं ततोऽष्टादशांशैर्दलमध्यभूवृत्तं ततश्चतु-विंशांशैर्दलकोटिवृत्तं इतो वृत्ताद्यस्रकृतिव्यासवृत्तं तद्दलाग्रकाणां स्यादित्यर्थः । तत्र या कर्णिका तां न खनेत् । उक्तंच शारदायां । वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेदिति । कामिकेपि । चतुरस्राष्टभागेन कर्णिका स्याद्विभागतः । तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत् । तृतीये दलमध्यानि चतुर्थे दलकोटयः । चतुरस्राद्बहिः कुर्याद्दलाग्राण्यपि यत्नतः

अंतर्बाह्यज्याकं तेन स्यात्पद्ममत्र बहुशोभं । तत्र रसांशैः ६ स्यातां पिंडव्यासौ तु
कर्णिकाया वै ॥ १०५ ॥ तत्परितः सूर्यांशैः १२ केसरवृत्तं ततोऽथ धृत्यंशैः १८ ।
दलमध्यवृत्तमेतत्सिद्धांशैः २४ पर्णकोटिवृत्तं स्यात् ॥ १०६ ॥

इति ॥ अथ फलानयनं ॥ तत्र व्यासः ३१।३ अस्य चतुरस्रज्या २२।१।४ अस्य वर्गश्चतुरस्रफलं ४९२।२।२ अथावशिष्टं लघुत्र्यस्रचतुष्टयफलं तद्यथा यच्चतुर्विंशत्यंशैर्दलकोटिवृत्तं कृतं तस्याष्टास्रिज्या ९।१।४ अस्यार्धं भूम्यर्धं ४।४।६, अथ चतुर-स्रज्योनबृहद्व्यासः ९।१।४ अस्यार्धं लघुकोणलंबः ४।४।६ लंबगुणमितिफलं २१।४ चतुर्गुणं ८४।४ पूर्वफले योजिते सर्वं फलं ५७६।६।२ अधिकं ध्वजायः । धनुर्द्वयस्य तु समानांतरयोगे समतैवेति नियमात्तत्फलकरणप्रयासो वृथैवेति ॥ १०४ ॥

॥ १०५ ॥ १०६ ॥ अथ प्रकारांतरेण पद्ममाह ॥ अथवेति ॥ यत्पूर्वपद्मकुंडे तृतीयं वृत्तमष्टादशांशैः कृतं तदत्र सयवनखैरेकयवसहितैर्विंशत्यंगुलैः कृत्वाऽष्टधा विभजेत्। ननु अत्र पारिभाषिकमष्टधाकरणं पूर्वमुक्तमपि पुनः कथमुक्तमितिचेत् तच्च पूर्वपद्मकुंडवच्चिह्नद्वितयमध्यादष्टौ भागान् कुर्यादिति ध्वननार्थमित्यर्थः। तत्प्रतिचिह्नाच्चिह्नद्वयमिता या ततिर्व्यासार्धं तेन धनुर्द्वयं तनुयाद्विस्तारयेत्। तदनुलोमविलोमं एकमनुलोमं द्वितीयं विलोमं तद्विपरीतं तनुयात्। तेनात्र सुष्ठु सुंदरं पंकजं पद्मकुंडं स्यादित्यर्थः॥ अथ फलानयनं ॥ व्यासः २०।१ अष्टास्रिज्या ७।५।४ इयमेव भूमिः अस्यार्धं ३।६।६

प्रकृतिस्तृतिवृत्तमितो दलाग्रकाणां च कर्णिकां न खनेत् । अथवा तृतीयवृत्तं
सयवनखैः २०।१ कल्प्य चाष्टधा विभजेत् ॥ १०७ ॥ प्रतिचिह्नाच्चिह्नद्वयमितत-
तिनापि च धनुर्द्वयं तनुयात्। अनुलोमविलोमं तत्तेन स्यादत्र पंकजं सुष्ठु ॥१०८॥

व्यासार्धं १०।०।४ अनयोर्वर्गांतरमूलं लंबः ९।२।४ लंबगुणमितिफलं ३५।६।२ इदमष्टगुणं मध्याष्टास्रिफलं जातं २८।६। २ अथ धनुःफलं तत्राष्टास्रिज्यैव व्यासार्धं तयैव धनुःकृतत्वात् अस्यार्धं शरः ३।६।६ द्विगुणाष्टास्रिज्यैव व्यासः १५।३ व्यासाच्छरोनादित्यादिना ज्या १३।२।५।५ व्यासपादस्य शरत्वात्तदूनव्यास एव लंबः ११।४।२ भूम्यर्धं च ज्यार्धं ६।५। २।६।४ लंबगुणमिति वृत्तांतस्त्र्यस्रफलं ७७। अथ धनुर्व्यासवर्गः २३७।२।६ रुद्राहत इत्यादिना फलं १८५।५।६ फलयोरंतरं १०८।५।६ अस्य त्र्यंशो धनुःफलं ३६।१।७ इदमष्टगुणं २८९।७ पूर्वाष्टास्रिफले युक्तं जातं संपूर्णं फलं ५७६।२। ध्वजायोपि

धनुर्वृत्ते या ज्या सा तद्वृत्तगतत्र्यस्त्रिज्यैव व्यासपादस्य शरत्वात् । अतस्तद्वृत्तफलं तद्गतत्र्यस्त्रफलोनं शेषं धनुस्त्रयफलं तस्य त्र्यंश एव धनुःफलमिति स्पष्टमेव ॥ १०७ ॥ १०८ ॥ अथ श्रीमद्बापूदेवकल्पितं पद्मकुंडमाह ॥ अंभ इति ॥



अंभोनिधिवन्ह्यंशैः ३४ खखमुनिकु १७० लवेन चापि संयुक्तैः ।
वृत्ते चिह्नद्वितयेत्याद्यब्ध्यस्त्रांतमुक्तवत्कृत्वा ॥ १०९ ॥

प्रथमपद्मकुंडस्य पूर्वरूपं



प्रथमपद्मकुंडस्य सिद्धरूपं



द्वितीयपद्मकुंडस्य पूर्वरूपं



द्वितीयपद्मकुंडस्य सिद्धरूपं





अंभोनिधिवह्न्यंशैश्चतुस्त्रिंशदंगुलैः स्वस्य यः खमुनिकुलवः सप्तत्युत्तरशततमो भागस्तेन युक्तैर्वृत्ते कृते सति । पूर्वोक्त-पद्मकुंडे चिह्नद्वितयेत्यादिसमचतुरस्रद्वयकरणांतं कृत्वा तद्भुजार्धाद्भुजमध्यतः भुजार्धेनैवांतः वृत्तस्य अष्टौ दलानि वि-

लिखेत्तथा केंद्रान्मध्याद्दलसंधिस्तदंतमवधीकृत्य कर्णिकादीनि कर्णिकाकेसरपत्रमध्यभूसंज्ञानि त्रीणि वृत्तानि विलिखेत्तेन पद्मं पद्मकुंडं भवतीति श्रीमद्बापूदेवैः प्रकल्पितं सुंदरं रमणीयमित्यर्थः ॥ अथ फलानयनं ॥ व्यासः ३४।१।४।६ अस्य वर्गः ११६९।४।६।२।२ अस्यार्धं ५८४।६।३।१।१ अस्य मूलं २४।१।३।५।४ इदमेवाष्टौ वलयार्धानां व्यासः। अस्यैव मध्यव्यास इति संज्ञांतरं। अथास्य वर्गः ५८४।६।३।१।१ भनवाग्निनिघ्नः २२९६५०५।७५।२ पंचसहस्रभक्तः लब्धं फलं वृत्तस्य ४५९।२।३।२ अथ बृहद्व्यासार्धं १७।०।६।२ इदं मध्यवृत्तांतश्चतुरस्रभुजः अस्य वर्गश्चतुरस्रफलं २९२।३।१।२ इदं वृत्तफलादूने शेषं १६६।७।२ दलद्वयफलं । अथ मध्यव्यासवर्गः ५८४।६।३।१।१ तथास्यैवाष्टास्रिज्या द्विद्वीत्यादिना

बाह्वर्धाद्बाह्वर्धेनैवांतोऽष्टौ दलानि वृत्तस्य। केंद्राद्दलसंध्यंतं वृत्तानि त्रीणि कर्णिकादीनि ॥ ११० ॥

९।२।०।२ अस्यावर्गः ८५।५।०।५ द्वयोरंतरं ४९९।१।२।४।१ अस्यमूलं २२।२।६।४ अष्टास्रिज्यया गुणितं २०६।६।६ द्विगुणमिदमंतरष्टास्रफलं ४१३।५।४ इदं वृत्तफलादूनं ४५।४।७।२ अस्यार्धं लघुवृत्तांतर्मध्यार्धवृत्तसंपातोत्पन्नलघुदलानां फलं २२।६।३।५ इदं दलद्वयफलादूनिते शेषं १४४।०।६।२ चतुर्गुणमिदं ५७६।३।१।४ अथवा दलद्वयफलं १६६।७।२ चतुर्गुणं ६६७।५ वृत्तफलादंतरष्टास्रिफलं शोधिते शेषं ४५।४।७।२ द्विगुणमिदं ९१।१।६।४ चतुर्गुणितदलद्वयफलादूनं जातं ५७६।३।१।४। अधिकं ध्वजायः। अथवा वृत्तसंपातपर्यंतं केंद्राद्वृत्तं प्रकल्पितं तद्व्यासमानं पूर्वोक्ताष्टास्रिज्याद्विगुणं १८।४।०।४ अस्य लघुव्यास इति संज्ञा। अस्याप्यष्टास्रिज्या ७।०।५।२ तद्दलं ३।४।२।५ अस्य वर्गः १२।४।२।४ लघुव्यासा-

र्धवर्गः ८५।५ द्वयोरंतरं ७३।०।५।४ मूलं ८।४।४ जातोऽयं लंबः अनेन गुणं ज्यार्धरूपं भूम्यर्धं ३०।२।४।४ अष्टगुणं

वापूदेवकल्पितपद्मकुंडस्य पूर्वरूपं




वापूदेवकल्पितपद्मकुंडस्य सिद्धरूपं



२४२।४।४ ज़ातमिदं लघ्वष्टास्रिफलं । अथ पत्रचतुर्थांशद्वयमेलनेनैकं धनुस्तन्मानं यथा मध्यव्यासः २४।१।३।५।४ अस्य परिधिः ७६ अस्याष्टमांशो धनुर्दलं ९।४ मध्यव्यासदलं १२।०।५।६।६ द्वयोर्घातः ११४।७ अंतरष्टास्रिज्यार्धमेव शरः ३।४।२।५ शरोनमध्यत्रिज्या ८।४।३।१।६ धनुर्ज्या तु बृहद्व्यासार्धादंतर्लंबोने सति शेषं धनुर्ज्यामानं ८।४।३।१।२ अनयोर्घातः ७३।०।६ घातयोरंतरं ४१।६।२ अष्टगुणं ३३४।०।६ लघ्वष्टास्रिफले युक्तं सत् ५७६।५।२ जातं सर्वफलं ध्वजायोपि ॥१०९॥११०॥

**विलिखेदिति वा बापूदेवोक्तं स्याच्च सुंदरं पद्मं। वक्रांसयोस्तु मध्यादष्टज्याभिःसमाभिरष्टास्रं ॥१११॥**

अथाष्टास्रमाह ॥ वक्रेति ॥ वक्रं मुखं अंसो बाहुस्तयोर्मध्यः मध्यदेशस्तस्मात्तुल्याभिरष्टज्याभिरष्टास्रं अष्टकोणकुंडं भवतीत्यर्थः ॥ अथ फलानयनं ॥ व्यासः २८।४ अस्यार्धं १४।२ तथा द्विद्वीत्यादिनाष्टास्रिज्या १०।७।५ अस्यार्धमाबाधा ५।३।६।४ अथ व्यासार्धकृतिः २०३।०।४ आबाधाकृतिः ३० अनयोरंतरं १७२।७।४ अस्य मूलं लंबः १३।१।२ अनेन भूम्यर्धं गुणितं जातमेकत्र्यस्रफलं ७२।०।२ इदमष्टगुणं सर्वकुंडफलं ५७६।२ अधिकं ध्वजायः ॥ १११ ॥

कुंडेति ॥ अत्र कुंडस्याकृतिराकारः सिद्धौ सत्यां अधिकं यच्चिह्नं रेखादि तत्प्रमृज्य तत् अभीष्टं कुंडं स्यादित्यर्थः । तथा कुंडानां करणे रेखादिकरणे कर्तुः कर्ता तस्य सर्वत्र प्राग्वक्त्रता प्राङ्मुखता स्यादित्यर्थः ॥ ११२ ॥ अथ कुंडार्कोक्तमष्टास्रं स्रग्धरयाह ॥ मध्यादिति ॥ मध्यात्केंद्रात्त्रियवयुतचतुश्चत्वारिंशदंगुलैर्वृत्तं कुर्यात्तत्र वृत्ते काष्ठा दिक्

कुंडाकृतिसिद्धौ तद्धयधिकांकादिकमिह प्रमृज्यात्र। कुंडानां करणे स्यात्कर्तुः प्राग्वक्त्रता च सर्वत्र ॥११२॥




मध्याद्वृत्तं प्रकुर्यात्त्रियवयुतखसिंध्वं ४०।३ गुलैरत्र काष्ठा व्याशामध्यास्त्रमेवं युग ४ भुजयुगलं २ तस्य दोर्मध्यतः स्यात्। अष्टौ ज्याः स्युस्तदंतात्सशरमुनियवाभ्राब्जपर्वैः १०।७।५ र्ज्यकाभिः कुंडार्कोक्तं नृपालोन्मित १६ गुण ३ भुजकानि प्रमार्ज्योरगा ८ स्त्रं ॥ ११३ ॥




व्याशा विदिक् तयोर्मध्ये अस्राः कोणा यस्यैवं युगभुजयुगलं चतुर्भुजद्वयं कुर्यात्तस्य चतुर्भुजद्वयस्य ये दोषो भुजास्तेषां मध्यादष्टौ ज्याः स्युस्तदंतात्तासामपि मध्यात्सशरमुनियवाभ्राब्जपर्वैः दशांगुलसप्तयवपंचयूकात्मकाभिः १०।७।५ ज्याभिः नृपालोन्मितानि यानि गुणभुजकानि त्र्यस्राणि उत्पद्यंते तानि प्रमार्ज्य प्रोंछ्य उरगास्रमष्टास्रं यत्कुंडार्के उक्तं तत्स्यादि-

त्यर्थः । तथा च कुंडार्कः । युगभुजयुगलं दिग्विदिक्कोणकं स्याद्बाह्यत्र्यस्राष्टकोनं त्रियवयुतखसिंध्वंगुले ४०।३ ऽष्टास्रि कुंडमिति । अत्र तातचरणकृतपद्मिनीटीका । यवत्रयाधिकचत्वारिंशदंगुले वृत्ते दिग्विदिशोंतरालेऽष्टौ चिह्नानि कार्याणि ॥ तत्र समचतुरस्रद्वयं कार्यं । तत्र यानि बाह्याष्टकोणानि भवंति तदेकत्रिकोणभूमिमध्यादारभ्य तत्समीपस्थद्वितीयत्रिकोण- भूमिमध्यपर्यंतमेको भुजो देयः । एवं तत्र त्रिकोणाष्टकद्वयमुत्पन्नं भवंति तत्परिमार्ज्य मध्ये ज्याष्टकं रम्यं कुंडमुत्पद्यते

कुंडार्कोक्ताष्टास्रस्य पूर्वरूपं




अयमेव मूलाशय इति भाति । यथाश्रुतार्थकरणस्यादोषावहत्वादित्यादि- सुविस्तृतमुक्तं जिज्ञासुभिस्तत एवोह्यं । अत्र तात्पर्यांशः । युगभुजयुगलमिति वाक्यस्थदिग्विदिक्पदे दिगंतरालसमासमंगीकृत्य त्र्यस्राष्टकपदस्य लक्षणया त्र्यस्राष्टकद्वयमित्यर्थः कृतः । अयमेवार्थः साधीयान् । अतएव कुंडार्कस्य प्राचीनटीकाकारै रघुवीरदीक्षितैरप्यस्य श्लोकस्य व्याख्यानावसरेऽस्य प्रकृतिवृत्तं सार्धाष्टाविंशत्यंगुलं प्रागेवोक्तं । इदं स्थितिवृत्तं पूर्वं क्रियावृत्तमिति भेद इत्युक्तं ।

कुंडार्कोक्ताष्टास्रस्य सिद्धरूपं



यत्तु द्वियवयुतमुनित्र्यंगुलेति । तथा त्रयवियुतखसिंध्वंगुलेति पाठकल्पकाः स्वभ्रांतिमजानाना मंदबुद्धीनां व्यामोहकर्ता- रस्तत्कल्पितपाठोऽपपाठ इत्युपेक्षणीयः ॥ अथ फलानयनं ॥ तत्र व्यासः ४०।३ अस्य चतुरस्रज्याः २८।४ इयमेवांतर्ग- ताष्टास्रस्य व्यासः सतु पूर्वोक्ताष्टास्रिकुंडे उक्तस्तत्रोक्तवत्फलं ५७६।२ अधिकं ध्वजायः ॥ ११३ ॥

एवं नवकुंड्यादिषु कुंडान्युक्त्वाधुना ग्रहयज्ञोपयोगीनि ग्रहपीठाकारकुंडानि वक्तुं शालिन्योपक्रमते ॥ खेटेति ॥ खेटा ग्रहा-स्तेषां क्षेत्राणि पीठानि तेषामाकार इवाकारो येषां तानि कुंडानि पूर्वैः प्राचीनैः पारिजातग्रंथविशेषे प्रोक्तानि कथितानि स्युरि-त्यर्थः । अथ नव्यैस्तु अत्र कुंडग्रंथादौ न प्रोक्तानि अतो हेतोस्तानि वच्मि कथयामीत्यर्थः । वृत्तं कुंडादौ करणीयं । क्षेत्राकारो वर्तुलादिः । उन्मानं क्षेत्रोन्मानं क्षेत्रफलमिति यावत् । तानि पूर्वं येषु एतादृशानि ग्रहकुंडानि सम्यगुत्तमप्रकारेणेत्यर्थः । तथाच शांतिमयूखे । अत्रैकाग्निब्रह्माचार्यपक्षमुक्त्वा तेषां नवसंख्यकुंडेषु तत्तद्ग्रहाकारांश्चाह प्रयोगपारिजाते भगवान् । मनोरमे

खेटक्षेत्राकारकुंडानि पूर्वैः प्रोक्तानि स्युः पारिजातेऽथ नव्यैः । नात्र प्रोक्तानीत्यतो वच्मि
वृत्तक्षेत्राकारोन्मानपूर्वाणि सम्यक् ॥ ११४ ॥ मध्ये वृत्तं पूर्वदिक्तः शरास्त्रमब्ध्यस्त्रं च
त्र्यस्त्रशूर्पाकृतीह । चापं केतुर्दीर्घरत्नाकरास्त्रं बाणाकारं त्रीणि चोक्तानि तेषु ॥ ११५ ॥

शुचौ देशे होमशालामलंकृतां । कृत्वा तु संवृतं प्राज्ञो ग्रहस्थानं प्रकल्पयेत् । तन्मध्ये भास्करस्थानं भवेत्पूर्वोत्तरे बुधः । पूर्व-स्मिन्भार्गवस्थानं सोमो दक्षिणपूर्वके । दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे । शनेस्तु पश्चिमे स्थानं केतोरुत्तरपश्चिमे । उत्तरस्यां गुरोः स्थानमेवं च स्थंडिलं भवेदिति । स्थंडिलमध्यर्थं कुंडमिति ॥ ११४ ॥ अथ ग्रहकुंडस्थानान्याकारांश्च शालिन्याह ॥ मध्य इति ॥ मध्ये मंडपमध्यकोष्ठे वृत्तं वलयं पूर्वदिक्त आरभ्य प्रादक्षिण्येनाष्टसु कोष्ठेषु शरास्त्रं पंचकोणं अब्ध्यस्त्रं चतुरस्त्रं त्र्यस्त्रि त्रिकोणं शूर्पाकृति शूर्पाकारं च ते चापं धनुः केतुर्ध्वजः दीर्घरत्नाकरास्त्रमायतचतुरस्त्रं बाणाकारं

शराकारमित्येतानि नव कुंडानि तेषूक्तकुंडेषु त्रीणि वृत्तचतुरस्रत्रिकोणानि पूर्वमेवोक्तान्यतोऽग्रे नोच्यन्त इत्यर्थः । उक्तं च शांतिमयूखे प्रयोगपारिजाते च । भास्करस्य तु वृत्तं स्याच्चंद्रस्य चतुरस्रकं । कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु । गुरोर्दीर्घचतुष्कोणं पंचकोणं सितस्य तु । चापाकारं शने राहोः शूर्पं केतोर्ध्वजाकृति । नवधा विभजेदग्निं श्रौतकर्मविधानतः । ऋत्विजश्च यथायोगं कुंडेषु ब्राह्मणाः पृथगिति । अत्रैव च स्थंडिलं भवेदित्यनेन स्थंडिलानां कुंडानां च स स आकारस्तत्तद्दिक्षु निवेशश्चोक्तः । ब्राह्मणाः पृथगित्यनेन नवाचार्या ब्रह्माणाश्च नवेत्युक्तं । अत्रार्थसंक्षेपः प्रयोगपारिजाते ।

तेषामीशाः सूर्यशुक्रेंदुभौमा राहुर्मंदः केतवो जीवसौम्यौ ।
रक्तः श्वेतः श्वेतरक्तौ त्रयोऽथ कृष्णाभाः स्युः पीतवर्णौ क्रमेण ॥ ११६ ॥

मध्यकुंडे स्मार्ताग्निं प्रणीयाज्यभागांतेऽर्कादिसमिद्भिर्गुडौदनादिहविर्भिराज्येन च ग्रहादिमंत्रैर्हुत्वा व्यस्तसमस्तव्याहृतिभिश्च तिलान्हुत्वा स्विष्टकृदादिहोमशेषं कृत्वा पूर्णाहुतीर्जुहुयुरिति ॥ ११५ ॥ अथ दिक्क्रमेण कुंडेशान्ग्रहांस्छालिन्याह ॥ तेषामिति ॥ तेषां कुंडानामित्यादिस्पष्टं । ग्रहाणां वर्णानाह । रक्त इत्यादि । तदुक्तं वृद्धपराशरेण । रक्तः कश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी । रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः । पीतो ब्राह्मः सुराचार्यः शुक्लः शुक्रो भृगूद्वहः । कृष्णः शनी रवेः पुत्रः कृष्णो राहुः प्रजापतेः । कृष्णः केतुः कृशानूत्थः कृष्णाः पापास्त्रयोप्यमीति ॥ ११६ ॥

अथ ग्रहाणां दिगभिमुखत्वं शालिन्याह ॥ एतेष्विति ॥ एतेषूक्तग्रहेषु प्राङ्मुखावित्यादि स्पष्टं । तदुक्तं स्कांदे । शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः इति ॥ ११७ ॥ अथ राहोः शूर्पाकारकुंडं स्रग्धरयाह ॥ वक्रादिति ॥ वृत्ते कृते सति वक्रात्पुच्छात्पार्श्वादिति सामान्योक्त्या पार्श्वद्वयादि च त्रिभुजकुंडे यथोक्तं पुच्छात्परिधि-




एतेष्वत्र प्राङ्मुखौ सूर्यशुक्रौ भौमो राहुः केतवोऽवाङ्मुखाश्च ।
प्रत्यक्कात्मा चंद्रसौरी ततो द्वौ जीवज्ञौ त्वं विद्धि चोदङ्मुखाब्जौ
॥११७॥ वक्रात्पुच्छाच्च पार्श्वात्त्रिभुजवदिह भो ज्याचतुष्कं प्रदेहि
ताभिर्मध्ये युगास्रं प्रभवति खलु तत्पूर्वसंपातयुग्मात् । पुच्छा-
दस्मिन्कृतज्याग्रगमिह सुसमं सूत्रयुग्मं ततश्च वेदा ४ स्रप्राग्ज्य-
कार्धज्यकवृतिदलयुग्मेन शूर्पं च राहोः ॥ ११८ ॥




प्राप्तेत्याद्युक्तरीत्या यथा तत्र पुच्छाद्व्यासार्धेन चिह्नद्वयं कृत्वा ज्या दत्ता तद्वदत्रापि मुखात्पुच्छात्पार्श्वद्वयाच्च ज्याचतुष्कं सूत्रचतुष्टयं प्रदेहि । ताभिर्ज्याभिः मध्ये युगास्रं चतुर्भुजं सुसमं भवति । तस्य पूर्वदिग्ज्या संपातद्वयात् पुच्छात्कृता या ज्या तस्याग्रद्वयं गच्छतीति । स्पृशतीति यावत् । एतादृशं सुसमं सूत्रद्वयं प्रदेहि । ततश्च मध्यचतुरस्रस्य या प्राग्ज्या त-

स्यार्धमेव ज्या यस्येत्येतादृशं वृत्तार्धद्वयं प्रदेहि । तेन राहोः शूर्पं शूर्पाकारकुंडं स्यादित्यर्थः ॥ अथ फलानयनं ॥ तत्र व्यासः ३८।३।२ त्रिघ्नंकेत्यादिना गुणितः ३९९६५६९।७।५।६ खखेत्यादिना भक्ते लब्धा त्र्यस्त्रिज्या ३।२।३।४ तथा षडस्त्रिज्या १९।१।५ द्वयोर्योगः ५२।४।०।४ अस्य दलं २६।२।०।२ लंवरूपया षडस्त्रिज्यया गुणितं ५०४।१।२ इदं विषम-चतुर्भुजफलं । अथ वृत्तार्धद्वयफलं । तत्र षडस्त्रिज्यार्धमेव व्यासः ९।४।६।४ अस्य वर्गः ९२।१।१।५ रुद्राहतः १०१३।५।२

द्वितीयशूर्पकुंडस्यपूर्वरूपं




द्वितीयशूर्पकुंडस्य सिद्धरूपं



वृत्ते पूर्वोक्तवदिह ज्याग्रस्पृक्सूत्रयुगुलकांतं च ।
केंद्रादथ पूर्वाशासंपातद्वयगतेन धनुषा तत् ॥ ११९ ॥

शक्रहृतः ७१।५।४।१ फलयोर्योगः ५७५।६।६।१ यवोनं फलं तददोषाय स्वल्पांतरत्वात् ॥ ११८ ॥ अथ प्रकारांतरेण शूर्पकुंडं गीत्यार्ययाह ॥ वृत्त इति ॥ वृत्ते कृते सति सर्वं पूर्वोक्तवद्दक्षपार्श्वात्कृतज्याग्रद्वयस्पृक् सूत्रद्वयांतं कुर्यात् । अथ ततः केंद्रान्मध्यात्पूर्वस्यां दिशि यत्संपातद्वयं तस्मिन्गतेन लग्नेन धनुषा तत् शूर्पाकारं कुंडं स्यादित्यर्थः । अथ फलान-यनं । व्यासः ३९।०।६ त्र्यस्त्रिज्या २३।६।६।६ अथ व्यासदलं १९।४।२ योगः ५३।३।१।६ दलं २६।५।४।७ लंवरूपेण

व्यासदलेन गुणितं जातं विषमचतुर्भुजफलं ५२१।७।२ ॥ अथ धनुःफलानयनार्थं मध्यचतुरस्रस्य भुजवर्गः ३८२।०।०।५ इदं मध्यचतुरस्रफलमपि द्विगुणं ७६४।०।१।२ अस्य मूलं धनुर्व्यासः २७।५।१।२ परिधिः ८६।७।०।४ धनुर्व्यासांघ्रिः ६।७।२।२ परिधिगुणः ६००।३।५।२ इदं धनुर्वृत्तफलं अस्मान्मध्यचतुरस्रफलोनात् २१८।३।०।२ चतुर्थांशः ५४।५।६।०।६ विषमचतुरस्रफले युक्तः ५७६।४।१।०।६ अधिकं ध्वजायः ॥११९॥ अथ शनेर्धनुराकारं कुंडं स्रग्धरयाह ॥ मध्यादिति॥ मध्यादुक्तव्यासस्य अग्निभागे तृतीयांशे स्वकीयो यो रविलवः द्वादशांशस्तेन युक्ते एतादृशे देशे निर्ऋतौ दिशि एकं वृत्तं तथा तदनु तस्मिन्वृत्ते सव्यपार्श्वे मध्यं प्रकल्प्य वृतिं वृत्तं कुरु । तयोर्वृत्तयोर्दक्षवामपार्श्वाद्बाह्ये बहिस्तृतेर्व्यासस्य रसांशः

मध्याद्व्यासाग्नि ३ भागे स्वरवि १२ लवयुते निर्ऋतौ वृत्तमेकं तस्मिन्सव्याच्च पार्श्वा-
त्तदनु कुरु वृतिं वृत्तयोर्दक्षसव्यात् । पार्श्वात्कृत्वा च बाह्ये स्तृतिरस ६ लवगौ द्वौ
गुणौ तत्सकाशात्पार्श्वस्कंधांतरस्पृग्गुणमपि कुरु पार्श्वांतरे ज्यां धनुः स्यात् ॥ १२० ॥

षष्ठांशस्तं गच्छत इति तादृशलवगौ द्वौ गुणौ कृत्वा ताभ्यां सकाशात् पार्श्वश्च स्कंधश्च तयोरंतरं मध्यं स्पृशतीत्येवं गुणं सूत्रमपि कुर्वित्यर्थः । तथा वर्धितपार्श्वयोरंतरे ज्यां ज्यारूपं सूत्रं कुर्वित्यर्थः । तेन धनुःकुंडं स्यादिति ॥ अथ फलानयनं ॥ व्यासः २९।२।४ तत्र पूर्वदिक्संपातात्परिधिद्वयस्य दक्षसव्यपार्श्वावधिज्यादाने धनुर्मध्ये बृहत्त्रिभुजमुत्पद्यते । तथा द्वे धनुषी उत्पद्येते । तस्य भूमिः सार्धव्यासः ४४ अस्यार्धं २२ अथ वृत्तद्वयसंपातमध्ये समभुजत्र्यस्रद्वयमुत्पद्यते तस्य भुजो व्यासार्धमेव । व्यासार्धोनं बृहत्त्र्यस्रभूम्यर्धं अंतस्त्रिभुजाबाधा ताभ्यां लंबमानं १२।६ लंबवर्गभूम्यर्धवर्गयोगमूलं धनुर्ज्या-

मानं २५।३।३ लंबगुणमित्यादिना बृहत्त्र्यस्रफलं २८०।४ अथ द्वयोर्धनुषोः फले तत्र ज्याव्यासयोगांतरघातमूलं व्यास-स्तदूनो दलितः शरः स्यादित्यादिना शरः ७।२। धनुर्मानानयनं स्वल्परीत्याहाऽऽर्यभट्टः। शरवर्गात्षड्गुणिताज्ज्याकृतियुक्ता-त्पदं चापमित्यादिना चापमानं ३०।४।५ ॥ धनुःफलानयनेऽस्मत्तातचरणकृतश्लोकः। धनुर्दलं व्यासदलेन हत्वा शरोनया त्रिज्यकया ज्यकार्धं। तयोर्द्वयोर्यद्विवरं तदेव धनुःफलं स्पष्टतरं भवेच्चेत्यादिना धनुःफलं १३५।२ इदं द्विगुणं धनुषोः फलं २७०।४ अथ परिधिद्वयबाह्यतः लघुत्र्यस्रद्वयं तस्य फलं यथा व्यासषष्ठांशः ४।७।१ अस्याग्रात्पार्श्वश्रोणिमध्यस्पृगन्यभुजे कल्पिते त्रिभुजमुत्पद्यते। तस्य भूमिरष्टास्त्रिज्या तन्मानं द्विद्विनंदेत्यादिना ११।१।६ ज्याव्यासेत्यादिनाशरः १।०।६।७ अ-नेन सहितो व्यासषष्ठांशो लंबः ५।७।७।७ अष्टास्त्रिज्यार्धमान्बाधा ५।४।७ लंबगुणमिति बहिस्त्रिभुजद्वयफलं २३।५।१।२ अथ शरवर्गेत्यादिना धनुर्मानं ११।४।३।२।४ धनुर्दलमित्यादिना धनुःफलं ८।५।१।६ इदं बहिस्त्र्यस्रफलोने शेषं त्र्यस्रफलं सर्वेषां योगे धनुःकुंडफलं ५७६ सूक्ष्मगणितेन ध्वजायोऽपि ॥ १२० ॥

धनुःकुंडपूर्वरूपं




धनुःकुंडसिद्धरूपं



अथ केतोर्ध्वजाकारं कुंडं स्रग्धरयाह ॥ मध्यादिति ॥ मध्यात्केंद्राद्वायोर्दिशायां ततेर्व्यासस्य यो गुणलवस्तृतीयांशः स्वस्य य इनभागो द्वादशांशस्तेन युक्ते देशे वृत्तं कुर्यात्तस्य मुखादुभयतः पुच्छतश्चापि अष्टाविंशत्यंशे चिह्नानि कुर्यात्ते- ष्वब्धिसूत्राणि कुर्यात्तेषु सूत्रेषु यो यमगुणः दक्षिणदिक्सूत्रं तस्याग्रतो मध्यतश्च द्वे सूत्रे दक्षांसतोधःपरिधेर्युगकरांशश्च- तुर्विंशांशस्तस्मिन्लग्ने सति केतोर्ध्वजाभं ध्वजाकारं कुंडं स्यादित्यर्थः ॥ अथ फलानयनं ॥ व्यासः ५८।१।४ अस्याष्टा-

ध्वजकुंडपूर्वरूपं




मध्याद्वायोर्दिशायां ततिगुण ३ लवके स्वेन १२ भागेन युक्ते
देशे वृत्तं प्रकुर्यान्मुखत उभयतः पुच्छतोऽष्टद्विभागे। चि-
ह्नान्येष्वब्धिसूत्राण्यपि च यमगुणस्याग्रतो मध्यतश्च सूत्रे
दक्षांसतोधः परिधियुगकरांशे च लग्ने ध्वजाभं ॥ १२१ ॥

ध्वजकुंडसिद्धरूपं



विंशत्यंशः २।०।५ द्विगुणो लघुज्या ४।१।२ व्यासयोगः ६२।२।६ अंतरं च ५४।०।२ घातः ३३६८।४।१ मूलं बृहज्ज्या ५८।०।३ लघुज्यया गुणितं २४१।२ जातमिदं ध्वजदंडफलं। अथास्य वृत्तस्य त्र्यस्रिज्या ५०।३।१ अस्यार्धं २५।१।४।४ लघुज्यार्धोनं २३।०।७४ जातोयं लंबः। अथ बृहज्ज्याचतुर्थांशो भूम्यर्धं १४।४।०।६ लंबगुणमिति ध्वजत्र्यस्रफलं ३२५।३।६ फलयोर्योगः ५७६।५।६ अधिकं ध्वजायः। अथवा बृहज्ज्यार्धं २९।०।१।४ षडस्रिज्यार्धोनं १४।४।२ जातेयं प्रथमाबाधा।

तथानयोनं बृहज्ज्यार्धं १४।३।६।४ अपराबाधा । अथ लंबेन प्रथमाबाधागुणिते जातं ३३६।२।२ अस्यार्धं १६८।१।१ तथापराममपिगुणिते जातं ३३४।६।४ अस्याप्यर्धं १६७।३।२ अर्धयोर्योगः ३३५।४।३ पूर्वानीतदंडफले युक्तं५७६।६।३ जातमिदं सर्वफलं अधिकं ध्वजायः ॥१२१॥ अथ गुरोर्दीर्घचतुरस्रं शालिन्याह ॥ वृत्तेति ॥ उक्तव्यासेन कृतं यद्वृत्तं तस्मिन्दक्षात्पा-र्श्वात्सव्यपार्श्वाच्च ऊर्ध्वाधःस्थितं यत्खंडयुग्मं पारिभाषिकखंडाष्टकेषु तत् त्रेधा कृत्वा त्रिधा विभज्य ततः पार्श्वद्वयात् अधोर्ध्वं




वृत्ते चोक्ते दक्षिणाच्चैव सव्यात्पार्श्वादूर्ध्वा-
धःस्थितं खंडयुग्मं । त्रेधा कृत्वा पार्श्वतोधो-
र्ध्वचिह्नयुग्मस्पृग्ज्याभिर्गुरोरब्धिकोणं ॥१२२॥






यच्चिह्नद्वयं तत्स्पृक् चतसृभिर्ज्याभिः श्रीगुरोर्बृहस्पतेरब्धिकोणं चतुरस्रमित्यर्थः । श्रीगुरोरित्यनेनायतचतुरस्रमुक्तं भवतीति ॥ अथ फलानयनं ॥ अत्र व्यासः ३६।३।७ तत्र लघुज्यामानं व्यासार्धं कल्पितं १८।१।७४ अथ ज्याव्यासेत्यादिना शरः २।३।४।२।५।२ अयं द्विगुणः ४।७।०।५ अनेनोनव्यासाच्छेषं ३१।४।६।२।५ इयमेव बृहज्ज्या । आयते तद्भुजकोटिघात इति

फलं ५७६।३।३।६।०।५ अधिकं ध्वजायः॥ १२२ ॥ अथ बुधस्य बाणाकारकुंडं स्रग्धरायुग्मेनाह ॥ वृत्तेति ॥ वृत्ते कृते पार्श्वद्वयं स्पृशतीत्येतादृशं ततिना व्यासेन सुसमं समानं गुणं सूत्रं संप्रसार्य विस्तार्याष्टकोणज्यां कृतवृत्ताष्टास्त्रिज्यां दक्षे सव्ये चापि । दक्षभागे सव्यभागे चापीत्यर्थः । तां अंसयुगुलस्य कटीयुगुलस्य पार्श्वयुगुलस्य चांतरं मध्यं स्पृशंतीं दत्वा अथ तदनंतरं वामभागे मुखस्कंधश्रोणिपुच्छानामंतरं मध्यं गच्छतीत्येतादृशं गुणं सूत्रं तनु विस्तारय। अथ तत्सूत्रव्याससूत्रयोः संपातात्पूर्वा-परदिशि पूर्वस्यां पश्चिमायामपि वसुकोणाष्टकोणस्य ज्यायाः जीवाया अंघ्रौ चरणे चरणमितदेश इत्यर्थः । एवं दक्षात्पार्श्वा-

वृत्ते पार्श्वद्वयस्पृक् ततिसुसमगुणं संप्रसार्याष्टकोणज्यां दक्षे चापि सव्येंऽस-
कटियुगुलपार्श्वांतरं च स्पृशंतीं । वक्रांसश्रोणिपुच्छांतरगमथ गुणं वामभागे
तनु त्वं तत्संपाताच्च पूर्वापरदिशि वसुकोणज्यकांघ्रौ च चिह्ने ॥ १२३ ॥

दपि अष्टास्त्रिज्यांघ्रिदेशे चिह्ने लक्षणे कुर्यादित्यर्थः । अथ तदनंतरं गुणयुगुलं सूत्रद्वयं चिह्नलग्नं प्रदद्यात् । ततस्तन्मूला-द्दक्षसंपातः दक्षज्यासंपातं गच्छतीत्येतादृशं गुणयुगं सूत्रयुग्मं देहि । अथो अनंतरं वामभागे मध्यात्संपाततः मध्यसं-पातादित्यर्थः । तथा प्रागपरदिशि भुजंगारुयष्टास्त्रिणः जीवायाः अष्टमांशात्त्रिगुणात् सव्यज्यका वामज्याया अंतर्गतं मध्यगतं गुणयुगुलं कुरु । अनेन बाणं बाणकुंडं स्यादिति शेषः ॥ अथ फलानयनं ॥ तत्र व्यासः ५८।७ अस्याष्टास्त्रिज्या २२।४।०।२ योगः ८१।३।०।२ अंतरं ३६।२।७।६ घातः २९५९।६।५।६ मूलं बृहज्ज्या ५४।३।२।०।५ अनयोनं व्यासार्धं

मध्यशरः २।१।६।७।५।४ अष्टास्रिज्योनव्यासार्धं बृहच्छरः १८।१।३।७ शरयोर्योगः २०।३।२।६।५।४ अनेनोनव्यासो बृहद्भुजः ३८।३।५।१।२।४ अष्टास्रिज्यार्धं लघुभुजः ११।२।०।१ घातः४३२।५।५ मध्यशरोनबृहच्छरस्त्रिकोणलंबः१५।७।४।७।२।४ अष्टास्रिज्याष्टमांशः २।६।४ त्रिगुणो भूम्यर्धं ८।३।४ घातः १३४।४।६ ॥ अथ व्यासः ५८।७ अस्याष्टास्रिज्यार्धं ज्या ११।२।०।१, योगः ७०।१।०।१ अंतरं ४७।४।७।७ घातः ३३३९।५।२ मूलं ५७।६।२।४ अनेनोनव्यासार्धं लघुशरः ०।४।२।६ लघुशरो-




एवं दक्षाच्च पार्श्वादथ गुणयुगुलं चिह्नलग्नं प्रदद्यात्तन्मूलाद्दक्षसंपातगतगुणयुगं देह्यथो वामभागे । मध्यात्संपाततः प्रागपरदिशि भुजंगास्त्रि जीवाष्टमांशात्त्रिघ्नात्सव्यजज्यकांतर्गतगुणयुगुलं कुर्वनेनात्र बाणं ॥ १२४ ॥ पंचास्त्रं च त्र्यस्त्रकं बाणकुंडं दीर्घाम्नायास्त्रीति सौम्याग्रकाणि । चापं शूर्पं पश्चिमज्यं च केतुर्दक्षाग्रः स्यात्सौमिकं चोत्तरास्यं ॥ १२५ ॥




नमध्यशरो भूम्यर्धं १।५।४।१।५ अष्टास्रिज्याचतुर्थांशो लंबः ५।५।०।४ घातः ९।४।०।६ घातत्रययोगः सर्वं फलं ५७६।६।३।६ अधिकं ध्वजायः ॥ १२३ ॥ अथ ग्रहकुंडानां निवेशनं 'शालिन्याह ॥ पंचास्त्रमिति ॥ स्पष्टं दीर्घाम्नायास्त्रीति बृहस्पतेर्दीर्घचतुरस्त्रं । सौमिकं चंद्रस्य चतुरस्रमिति । नात्र ग्रहवत्तत्तद्दिगभिमुखत्वं कुंडानां कल्पनीयं । अनुक्तस्थले योनिपातात् । तथाच निर्णयसिंधुटीकायां रांगनाथिः । यष्टिर्बाणः सौम्यदिश्यग्र एव त्र्यस्त्रं तादृक् शूर्पकं पश्चिमास्यं । बार्हस्पत्यं

सौम्यदीर्घं धनुस्तत्पश्चाद्दिग्ज्यं शुक्रियं सौम्यकोणं ॥ इतिदिक् ॥ १२५ ॥ अथ ग्रहकुंडप्रसंगाद्ग्रहपीठकरणप्रकारमपि शालिन्याह ॥ पीठानीति ॥ खेटवेद्यां पीठानि स्युः तत्तत्कुंडाकाराणि यस्य ग्रहस्य यथा कुंडाकारः तथैव पीठमित्यर्थः। अनेन

ग्रहवेदिरियं

| बुधपीठं ४ | शुक्रपीठं १ | चंद्रपीठं २४ |
|---|---|---|
| गुरुपीठं ६ | सूर्यपीठं १२ | भौमपीठं ४ |
| केतुपीठं ८ | शनिपीठं ६ | राहुपीठं २५ |

ग्रहदिगभिमुखत्वमपि पीठानां बोध्यं।तान्यमेखलानि मेखलारहितानि अखातकानि खातो गर्तस्तेन रहितानि तेषु पीठेषु योनिर्न स्यात्तानि अंशेन ग्रहवेदिचतुर्विंशांशोंऽशस्तेनोच्चानि यज्ञे ग्रहयज्ञे कुर्वीतैवेत्यर्थः । अथैतेषां पीठानामाकारादिनियमे ग्रहपीठमालायां वसिष्ठः। वृत्तं मंडलमादित्ये चतुरस्रं निशाकरे। भूमिपुत्रे त्रिकोणं

पीठानि स्युः खेचराणां तु तत्तत्कुंडाकाराणीह चामेखलानि ।
योनिर्न स्यात्तेषु चाखातकानि ह्यंशेनैवोच्चानि कुर्वीत यज्ञे॥ १२६ ॥

स्याद्बुधे वै बाणसन्निभं । गुरौ तु पट्टिशाकारं पंचकोणं तु भार्गवे । शनौ स्याद्धनुषाकारं शूर्पाकारं तु राहवे । केतोश्चैव ध्वजाकारं मंडलानि यथाक्रममिति । गोभिलोऽपि पीठानामंगुलनियममाह । द्वादशांगुलकं सूर्ये मध्ये वृत्तं तु कारयेत् । चतुर्विंशांगुलं सोमे आग्नेय्यां चतुरस्रकं । वेदांगुलं तु भौमस्य पैत्र्यां कुर्यात्रिकोणकं। वेदांगुलं बुधे कार्यं रौद्र्यां बाणाकृतिस्तथा । षडंगुलमुदग्जीवे पट्टाकारं

तु कारयेत् । नवांगुलं भृगौ पूर्वे पंचकोणं तु कारयेत् । पश्चिमे द्व्यंगुलं सौरेर्धनुषाकृति कारयेत् । शूर्पाकारं लिखेद्राहोः पंचविंशतिनैर्ऋते । पंचविंशांगुलं केतोर्वायव्ये च ध्वजाकृतीति । ग्रंथांतरे पीठांगुलनियमः । द्विषडंगुलकं सूर्ये सोमे तु द्विगुणं लिखेत् । चतुरंगुलं बुधे भौमे गुरौ मंदे षडंगुलं। भृगौ नवांगुलं लेख्यं राहौ सोममितागुलं। केतौ द्विरदसंख्याकं लिखित्वा पूजयेदनु। द्विषडंगुलं द्वादशांगुलं। आश्वलायनगृह्यपरिशिष्टेप्यंगुलसंख्या । द्वादशांगुलकः सूर्यः सोमस्तु द्विगुणस्तथा । कुजः स्याच्चतुरंगुलस्तदर्धं तु बुधः स्मृतः । षडंगुलो भवेज्जीवो भार्गवस्तु नवांगुलः । सौरी स्याच्चतुरंगुलो राहुश्च पंचविंशतिः । केतौ च पंचविंशतिरिति । अत्रांगुलसंख्यानियमकार्षवाक्यानां कतिपयपीठांगुलसंख्यायां विसंवादो दृश्यते तत्रैकतरालंबनेन परस्परवैयर्थ्यं। अतः सर्वानुसरणं श्रेय इति कृत्वा कानिचित्पीठानि सर्वसंमतानि कानिचिदेकसंमतानि धृतानीत्यतो न दोषः । अत्रार्षवाक्यानां सप्रामाण्यमित्यंतमुक्तं । तथा तत्रैव । होमपरत्वेन वेदिमानं भिन्नंभिन्नं तत्रैवोक्तमस्ति अतस्तद्धोमे तत्तन्मानयुतां ग्रहवेदीं विधाय तांतु एकहस्तमितां प्रकल्प्य तच्चतुर्विंशोंशोंगुलमित्यादिकृत्योक्तवद्ग्रहपीठानि कार्याणि । एतदाशयेनैव करमितां ग्रहवेदीमिति ग्रंथकारोक्तिरित्युक्तं ॥ अथैतेषां पीठानां फलानयनप्रकारः ॥ ॥ तत्र सूर्यपीठव्यासः ३।७।२।२ अस्य वर्गः १५।२।३।४ भनवाग्निनिघ्नः ६०१०१ पंचसहस्रभक्ते लब्धं सूर्यपीठफलं १२।०।१ अधिकं ध्वजायः ॥ ॥ अथ शुक्रपीठांतर्वृत्तव्यासः २।४।२।५ वेदाग्निबाणेत्यादिना पंचास्रिभुजः १।३।७ अयमेव त्र्यस्रद्वयभूमिः अस्यार्धमाबाधा ०।५।७।४।२।४ द्वयोस्त्र्यस्रयोर्लंबः बहिर्व्यासार्धमेव २।३।५ लंबगुणमितिफलं १।६।४ इदं पंचगुणं पंचास्रि शुक्रपीठफलं ९।०।६।४ ॥ अथ समपंचास्रपीठफलं व्यासः ३।७।१ वेदाग्निबाणेति

गुणिता २७४४२१।३ खखेति भक्ते लब्धा पंचास्रिज्या २।२।२ अस्यार्धमाबाधा १।१।१ व्यासार्ध एव कर्णः १।७।४।४ आबा-
धावर्गः १।२।३ कर्णवर्गः ३।६।२।१ अंतरं २।३।७।१। मूलं लंबः १।४।७।६ लंबगुणं फलं १।६।६।३ पंचगुणं ९।१।६ ॥ ॥ अथ-
चंद्रपीठव्यासः ६।७।३ त्रिबाणेत्यादिना चतुरस्रज्या ४।७।१।५ अनया समावेव भुजकोटी तयोर्घातः फलं २४।०।१
॥ ॥ अथभौमपीठव्यासः ३।४।२।५ त्रिद्व्यंकेत्यादिना त्र्यस्रिज्या ३।०।४।२ समभुजत्र्यस्रे भुजार्धमाबाधा १।४।२।१ अन-
योर्वर्गांतरमूलं लंबः २।५।४।७ लंबगुणमितिफलं ४।१।१ ॥ ॥ अथराहुपीठवृत्तव्यासः ८ त्रिद्व्यंकेत्यादिना त्र्यस्रिज्या
६।७।३।३।२ तथा षडस्रिज्या ४ द्वयोर्योगः १०।७।३।३। दलं ५।३।५।५ षडस्रिज्यागुणितं २१।६।६।६।४ अथ षडस्रिज्यार्धं
वृत्तव्यासः २ अस्य वर्गः ४ रुद्रहतः ४४ शक्रहृतः ३।१।१ पूर्वफले युक्तः २४।७।७।७।५ स्वल्पांतरत्वाददोषः ॥ अथ प्रका-
रांतरेणोक्तशूर्पपीठव्यासः ८।१।४ अस्य त्र्यस्रिज्या ७।०।५।६ तथा षडस्रिज्या ४।०।६ योगः ११।१।३।६ अस्यार्धं
५।४।५।७ षडस्रिज्यया गुणितं २२।७।१ षडस्रिज्यावर्गः १६।६ द्विगुणः ३३।४। अस्य मूलं ५।६।२।५ इदं धनुर्व्यासः अस्य
परिधिः १८।१।४।६ व्यासपादः १।३।४।५।२ परिधिगुणः २६।२।६।२ इदं वृत्तफलं अस्मात्षडस्रिज्यावर्ग ऊनः ९।४।६।२
अस्य चतुर्थांशो धनुःफलं २।३।१।४ विषमचतुर्भुजफले युक्तं जातं सर्वं फलं २५।२।२।४ ॥ ॥ अथ शनिपीठव्यासः
२।७।७।३।६ अत्र पूर्वदिक्संपाताद्धनुर्ज्याग्रद्वयावधिभुजद्वये कृते धनुर्मध्ये त्रिभुजमुत्पद्यते तथा द्वे धनुषी उत्पद्येते । तत्र
बृहत्त्रिभुजभूमिः सार्धव्यास एव ४।३।७।१।५ अस्यार्धमाबाधा २।१।७४।६ अथ पूर्वदिक्संपातमध्येऽन्यत्समभुजत्रिभुजमु-
त्पद्यते तस्य भुजाः व्यासार्धसमाः केंद्रात्परिधिलग्नत्वात् । अतोऽस्य व्यासस्य चतुर्थांशो भूम्यर्धं ताभ्यां लंबमानं १।२।३।२

द्व्योस्त्र्यस्रयोरयमेव लंबः । अनेन गुणितो व्यासचतुर्थांशो बृहत्त्रिभुजफलं २।७।३।०।४ अथ धनुषोः फले तत्र बृहत्त्रिभुज-भूम्यर्धलंबवर्गयोर्योगमूलं धनुर्ज्यामानं २।४।७।६।२ ज्याव्यासेत्यादिना शरः ०।५।७।१ शरवर्गेत्यादिना धनुर्मानं ३।२।१।०।४ धनुर्दलमित्यादिना धनुःफलं १।३।४।५ इदं द्विगुणं धनुषोः फलं २।७।१।२ अथ बाह्यत्र्यस्रफलं तत्र वर्धितभुजाग्रात्पार्श्व-श्रोणिमध्यस्पर्श्यन्यभुजे कल्पिते त्रिभुजमुत्पद्यते तस्य भूमिरष्टास्रिज्या द्विद्विनंदेत्यादिना १।१।१।२ वर्धितभुजो व्यासषडंशः ०।३।७।७।२ ज्याव्यासेत्यादिना शरः ०।०।७ अनेन सहितो व्यासषडंशो लंबः ०।४।६।७।२ अष्टास्रज्यार्धमाबाधा ०।४।४।५।०।४ लंबगुणमितिफलं २।६।२।१।२ इदमष्टास्रिधनुःफलोनं तत्र शरवर्गेत्यादिना धनुर्मानं १।१।३।७ धनुर्दलमि-त्यादिना धनुःफलं ०।१।१।१।६ इदं बहिस्त्र्यस्रफलोनं बहिस्त्र्यस्रफलं ०।१।६।७।४।२ सर्वेषां योगे सर्वं फलं ६।०।३।२ ध्व-जायोऽपि ॥ ॥ अथ केतुपीठव्यासः ६।६।७ अस्याष्टाविंशत्यंशः ०।२ द्विगुणो धनुः ०।४ लघुज्यापि स्थूला ०।३।७।७ ज्याव्यासयोगः ७।२।६।७ अंतरं ६।६।७।१ घातः ४६।६।३।२ मूलं बृहज्ज्या ६।६।७ लघुज्यया गुणिता ३।३।२।५ जातं दीर्घचतुरस्रफलं । अथ बृहज्ज्यादलं ३।२।६।३।५।४ वर्गः ११।१।६।५।१।४ बृहज्ज्यापादः २।६।३।५।४ वर्गः ८।३।२।७।५।४ वर्गयोरंतरं २।६।३।५।४ अस्यमूलं लंबः १।५।४।७।३। लंबगुणो बृहज्ज्यापादत्र्यस्रफलं ४।६।१।६।४ फलयोर्योगः ८।१।४।३।४ इति केतुपीठफलं ॥ ॥ अथ गुरुपीठव्यासः ३।५।५।५।४ अस्यार्धं १।६।६।६।६ इदं षडस्रिभुजः। अथ ज्याव्यासेत्यादिना शरः ०।१।५।३।५।६ अयं द्विघ्नः ०।३।२।७।३।४ अनेनोनो व्यासो बृहद्भुजः ३।२।२।६।०।४ चतुरस्रे भुजकोटिघातः फलं ६।०।७।३ ध्वजायोऽपि ॥ ॥ अथ बुधपीठफलानयनं ॥ तत्र व्यासः ४।७।२।०।३।५ अस्याष्टास्रिज्या १।७।०।१।४ अंतरं

३।०।१।६।७।६।६ घातः २०।४।३।३।३।२ अस्य मूलं बृहज्ज्या ४।४।३।४।२।५।१ अनेनोनव्यासार्धं मध्यशरः ०।१।३।२।०।३।७।४ अष्टास्रिज्योनव्यासार्धं बृहच्छरः १।४।०।७।३।७।२ शरयोर्योगः १।५।४।१।४।३।२।४ अनेनोनव्यासो बृहद्भुजः ३।१।५।७ अष्टास्रिज्यार्धं लघुभुजः ०।७।४।०।५।७।१ द्वयोर्घातः ३।०।१।२।३।४ मध्यशरोनबृहच्छरस्त्रिकोणलंबः १।२।५।५।३।३।३।४ अष्टास्रिज्याष्टमांशः ०।१।७।०।१।३।६।२ त्रिगुणभूम्यर्धं ०।५।५।०।४।३।२।६ लंबगुणमितिफलं ०।७।४।२।५।४ अथ व्यासः ४।७।२।०।३।५ अष्टास्रिज्यार्धं ज्या ०।७।४।०।५।७।५।६ योगः ५।६।६।१।१।४।१ अंतरं ३।७।५।७।५।६ घातः २३।१।४।५।४।५

व्यासाभ्यां वृत्तयुग्मं विरचय सुकृतिन्बाह्यमध्यस्थितित्वं वक्रात्पुच्छात्तयोर्वै
कुरु बुध परिधेः खंडकानीह पंच। बाह्यांकात्सूत्रयुग्मं वितनु सुमतिमन्मध्यम-
स्यांकयुग्मे स्यात्तत्पंचास्त्रि कुंडं भृगुजमखविधौ चाभिचारोपशांतौ ॥ १२७ ॥

मूलं ४।६।४।३।६।०।४ अनेनोनव्यासार्धं लघुशरः ०।०।५।४।५।४।४ लघुशरोनमध्यशरो भूम्यर्धं ०।०।५।५।२।७।३।४ अष्टा-स्रिज्याचतुर्थांशो लंबः ०।३।६।०।२ लंबगुणमितिफलं ०।०।२।५।२।३।१ फलत्रयाणां योगः ४।०।०।२।३।३।१ सर्वं फलं ध्व-जायोऽपि ॥ १२६ ॥ एवं प्रासंगिकानि ग्रहपीठान्युक्त्वाऽऽथोत्कलिकादौ पंचास्रं स्रग्धरयाह ॥ व्यासाभ्यामिति ॥ पूर्वमेवोत्कलिककुंडानां द्वौ व्यासावुक्तौ तत्र मध्याद्बहिर्व्यासेन बाह्यमंतर्व्यासेनांतर्वृत्तं एवं वृत्तयुग्मं विरचय कुर्वित्यर्थः। सुकृतिन्नित्यादिसंबुद्धयः। तद्वृत्तयुग्मं बाह्यमध्यस्थिति बाह्ये च मध्ये च स्थितिर्वर्तनं यस्य। एवं कृते तयोर्वृत्तयोः क्रमाद्व-

क्रान्मुखमारभ्य पुच्छमारभ्य च परिधेः पंच खंडानि कुरु । अत्र बाह्यस्य वक्रान्मध्यस्य पुच्छादिति क्रमः । तत्र खंडे कृते बाह्ये वृत्ते योऽकश्चिह्नं तस्मादारभ्य सूत्रयुग्मं सूत्रद्वयं मध्यमस्य मध्यवृत्तस्य चिह्नयुग्मे विस्तारय । तेन पंचास्रि पंचकोणं स्यादित्यर्थः । तत्पंचास्रि भृगुजः शुक्रस्तस्य यो मखविधिर्यज्ञविधिस्तस्मिन्नभिचारोपशांतौ च प्रशस्तं युक्तमित्यर्थः । तदुक्तं



उत्कलिक पंचास्रपूर्वरूपं



विज्ञानललिते । धनुर्ज्याकृतिभिः पंचसूत्रैः पंचास्रि कुंडकं । होमः प्रशस्यते भूतशाकिनीग्रहनिग्रहे इति ॥ अथ फलानयनं ॥ तत्रांतर्वृत्ते समपंचास्रिकल्पनेन दशत्रिकोणान्युत्पद्यंते । तत्र त्रिकोणद्वयफलं पंचगुणं सर्वकुंडफलं भवत्येव । अथांतर्वृत्ते व्यासः २० वेदाग्निबाणेत्यादिना पंचास्रभुजः ११।६ अयमेव त्र्यस्रद्वयभूमिः अस्यार्धमाबाधा ५।७ द्वयोर्लंबस्तु बहि-

उत्कलिकपंचास्रसिद्धरूपं



र्व्यासार्धमेव १९।५ अनेन गुणितं भूम्यर्धं जातं त्र्यस्रद्वयफलं ११५।२।३ इदं पंचगुणं सर्वफलं ५७६।३।७ अधिकं ध्वजायः ॥ १२७ ॥

अथोक्तप्रकारेण षडस्रादीनि शार्दूलविक्रीडितेनाह । एवमुक्तप्रकारेण षडस्रसप्तास्राष्टास्रीणि उत्कलिकानि स्युरिति शेषः । तत्र विशेषमाह । यथा पंचास्रे बाह्यमध्यवृत्तयोर्वक्रपुच्छाच्च पंच खंडानि कृतानि तथेहापि षडस्रे पार्श्वात्पुच्छाच्च षट् खंडानि कुरु तेन षडस्रि स्यादिति । अत्र सर्वेषूत्कलिकेषु पूर्वश्लोकस्य प्रथमतृतीयौ पादावनुवर्तनीयौ । तथा

उत्कलिकषडस्रपूर्वरूपं




एवं चोत्कलिकानि ष ६ ण्नग ७ गजा ८ स्रीणीह पार्श्वात्तथा पुच्छात्षट् कुरु खंडकान्यपि रसा ६ स्रि स्यात्तथागा ७ स्रकं । वक्रात्तत्किल पुच्छतोऽपि हि नगांशैः स्यात्तथास्यांसयोर्मध्यात्तन्मुखतो वदंति विबुधाश्चाष्टांशतोऽष्टा ८ स्रकं ॥ १२८ ॥

उत्कलिकषडस्रसिद्धरूपं



वक्रात्पुच्छाच्च सप्तभागैः सप्तास्रं तथा वक्रांसयोर्मध्यान्मुखतश्चाष्टांशतः अष्टभागैः कृत्वाऽष्टास्रकं विबुधा वदंतीत्यर्थः ॥ अथ फलानयनं ॥ तत्र व्यासः ३१।१ वेदाग्निबाणेत्यादिना पंचास्रिभुजः १८।२ अस्यार्धमाबाधा ९।१ तथा व्यासार्धं कर्णः १५।४।४ द्वयोर्वर्गयोरंतरं १५९।७।३ अस्य मूलं लंबः १२।५।१ लंबगुणमितिफलं ११५।२।६ पंचगुणं ५७६।६ अधिकं

ध्वजायः द्वयोर्द्व्यस्त्रयोर्बहिर्व्यासार्धमेव लंबः १९।१।५।४ लंबगुणमितित्र्यस्त्रद्वयफलं ९६।०।३।४ इदं षड्गुणं सर्वं फलं



उत्कलिकसप्तास्त्रपूर्वरूपं




उत्कलिकाष्टास्त्रपूर्वरूपं




५७६।२।५ ॥ अथ सप्तास्त्रांतर्वृत्तव्यासः ॥ २० बाणेषुनखबाणैश्चे-
त्यादिना सप्तास्त्रिभुजः ९।१।३ अस्यार्धं भूम्यर्धं ४।४।५ बहिर्व्यासार्धं
लंबः १८ लंबगुणमितिफलं ८२।३।२ इदं सप्तगुणं ५७६।६।६ ॥
॥ अथाष्टास्त्रफलं तत्रांतर्व्यासः ॥ २० द्विद्विनंदेत्यादिनाष्टास्त्रिभुजः
७।४।५ अस्यार्धं भूम्यर्धं ३।६।२।४ बहिर्व्यासार्धं लंबः १९ लंबगुण-
मितिफलं ७२ अष्टगुणं ५७६ अधिकेन सर्वत्र ध्वजायः ॥ १२८ ॥

उत्कलिकसप्तास्त्रसिद्धरूपं



उत्कलिकाष्टास्त्रसिद्धरूपं



अथ प्रकारांतरेण समत्र्यस्रादिसाधनादौ वृत्ते ज्योत्पादनं वैतालीयाभ्यामाह ॥ सुरेति ॥ हे बुध द्वाविंशत्या ततिं व्यासं हतां गुणितां तत् । सप्तभिः विभजेत् तेन यदाप्तं लब्धं तत् परिधिसंज्ञं कुंडकोणैः यत्कुंडे यन्मिताः कोणाः भवंति तैरित्यर्थः । १९ यथा त्रिभुजे त्रिभिः कोणैश्चतुर्भुजे चतुर्भिरित्यादिः ॥१२९॥ तत्रापि यल्लब्धं तदेव धनुरित्युदीर्यते प्राचीनैः । तद्धनुः क्रमेणं वक्ष्यमाणैर्निजभागैरूनितं सत् शिंजिनीं ज्यां कथयंति पूर्वाचार्याः ॥१३०॥ अथोक्तलवान् चित्राख्याभ्यां वैताली-




सुरवैद्यकरा २२ हतां ततिं विभजेच्चाथ बुधेह स७प्तभिः । परिधिर्यदि हाप्तमुच्यते विभजेत्तत्किल कुंडकोणकैः ॥ १२९ ॥ यदिहाप्तमुदीर्यते धनुस्त्रिभुजादौ क्रमशस्तदूनितं । अथ तां कथयंति शिंजिनीं निज-भागैरथ वक्ष्यमाणकैः ॥ १३० ॥ त्रिभुजे दहनेषुपावकां ३५३ शेन भूरस ६१ हतेन बुद्धिमन् । अथ सागरकोणके दशांशेन मार्ग-णभुजेषुभू १५ लवात् ॥ १३१ ॥




यभेदाभ्यामाह ॥ त्रिभुजइति ॥ त्रिभुजे धनुषस्त्रिपंचाशदुत्तरत्रिशतांशेनैकषष्ट्या गुणितेन धनुरूनं सत् त्रिभुजे ज्या भवतीति । एवं सागरकोणे चतुर्भुजे स्वदशांशेन मार्गणभुजे पंचभुजे इषुभूलवात्पंचदशांशेन ॥१३१॥ षड्भुजे द्विकरांशमितेन द्वाविंशतितमांशेन अश्वकोणे सप्तास्रे एकोनत्रिंशदंशेन अंतिमे अष्टकोणे षट्चत्वारिंशदंशेन ऊनितमिति पूर्वेणान्वयः । तैर्जाता या ज्यास्ताः यथाग्रे उच्यते तथा सन् लिखेत्यर्थः । सन्निति संबद्धिः ॥

॥ यथोदाहरणं ॥ त्र्यस्रव्यासः ४।२।१ अयं द्वाविंशत्या गुणितः ९२।६।६ सप्तभिर्भक्ते लब्धः परिधिः १३।२।३।१ त्रिभिर्भक्तः ४।४।१ इदमेव धनुः अस्य त्रिपंचाशदुत्तरत्रिशतांशः ०।१ एकषष्ट्या गुणितः ७।५ अनेनोनं धनुर्जाता ज्या ३।६।४ फलं ५७।६।४।५ ॥ अथ चतुरस्रव्यासः ॥ ३।३।७।४ पूर्ववत्परिधिः १०।६।५।५।२ चतुर्भिर्भक्ते धनुः २।६।५।३।२ अस्य दशांशः २।५।२।६ अनेनोनं २४।०।०।५ इयं ज्या उक्तवत्फलं ५७।६।४।५ पंचास्रव्यासः ३।१।१ परिधिः ९।७।६।४।४ पंचभक्तः १।९।४।५।१ अस्य

पंचास्रपूर्वरूपं




पंचास्रसिद्धरूपं



द्विकरांश २२ मितेन षड्भुजे नंदपक्ष २९ लवतोऽश्वकोणके ।
रसवेदलवेन ४६ चांतिमे ताश्च सन्लिख यथोच्यतेऽग्रतः॥१३२॥

पंचदशांशः १।२।३।४ अनेनोना ज्या १८।२।१।५ अत्र फलं ५७।६।३।४।४ ॥ अथ षडस्रव्यासः॥ २९।६ परिधिः ९।३।४ षड्भक्ते धनुः १५।४।५ अस्य द्वाविंशत्यंशः ०।५।५ अनेनोनं ज्या १४।७ अत्र फलं ५७६ ॥ अथ सप्तास्रव्यासः ॥ २९ परिधिः ९१।१।१।१.सप्तभक्तः १३।०।१।१ अस्यैकोनत्रिंशदंशः ०।३।५ अनेनोना ज्या १२।४।४।१ अत्र फलं ५७६ अष्टास्रव्यासः २८।४ परिधिः ८९।४।४।४ अष्टभक्तः ११।१।४।४ अस्य षट्चत्वारिंशत्तमोंशः ०।१।७।४। अनेनोनं धनुर्ज्या

१०।७।५ अत्र फलं ५७६।२ अत्र सर्वत्राधिकेन ध्वजायः। क्वचित्स्थले किंचिन्न्यूनाधिकमप्यदोषाय। उक्तमपि यवादूनं तु यन्मानं मंडपादौ न चिंतयेत्। सूत्रस्याधो विलीयंते यूकालिक्षादयः शतमिति। तथा प्रासादमंडने। अंगुलं सार्धमर्धं वा कुर्याद्धीनं तथाधिकं। आयदोषविशुद्ध्यर्थं ह्रासो वृद्धिर्न दुष्यतीतिं। तथा शतांशोनाधिकन्यूने ह्रासवृद्धी न दूषये-दिति। तथा मानादूनाधिकं क्षेत्रं कार्यं पर्वयवादिभिरिति च परशुरामकारिकास्वपि वेति पूर्वोक्तप्रकारेण विकल्प्यते ॥ १३२ ॥ अथवा उक्ता ज्यास्तासां वृत्ते लेखनं गीत्याह ॥ वक्रादिति ॥ त्र्यस्रादारभ्य वक्रान्मुखादंसात्स्कंधात्तथा

वक्रादंसाद्वक्रात्पार्श्वाद्वक्रान्मुखांसयोर्मध्यात्।

उक्तज्याभिस्तान्यथ पंचागास्रेऽभिचारशांतौ वा ॥ १३३ ॥

वक्रात् तथा पार्श्वात्तथा वक्रात्तथा मुखांसयोर्मध्यादुक्तज्याभिर्दत्ताभिस्तानि पूर्वोक्तानि कुंडानि स्युरिति शेषः। पंचास्रस-प्तास्रे त्वभिचारस्य शांतौ स्यातामित्यर्थः। तदुक्तं विज्ञानललिते। समीपसूत्रं तादृक्स्यात्सप्तास्रं सूत्रसप्तकात्। अभिचा-रोपशांत्यर्थे होमे कुंडं भवेत्स्फुटमिति। अथ समभुजपंचास्रसप्तास्रफले तत्र पंचास्रव्यासः ३१।१ उक्तवज्ज्या १८।२।१।५ इयमेव त्र्यस्रभूमिः अस्यार्धव्यासार्धवर्गांतरमूलं लंबः १२।५ लंबगुणं भूम्यर्धं फलं ११५।२।२ पंचगुणं पंचास्रफलं ५७६।४ अथ सप्तास्रव्यासः २९ उक्तवज्ज्या १२।४।४।१ पंचास्रवन्मध्यत्र्यस्रफलं ८२।२।२ सप्तगुणं सर्वं फलं ५७६।०।५ ध्वजा-

योऽपि ॥ १३३ ॥ एवं कुंडकरणप्रकारांतराण्युक्त्वा प्रकृतानि खातादिकुंडागान्याह गीत्या ॥ खातमिति ॥ कुंडस्य खातः कुंडगर्तः सः तिथ्यंशैः पंचदशांशैश्चतुर्विंशत्यंशैर्वा स्यात् । पंचदशभागैरिति नवांगुलोच्चमेखलापक्षे ज्ञेयमतो वक्ष्यति मेखलानामित्यादि । मेखलानामुच्छ्रितिरौच्च्यं तेन सह जिनलवैश्चतुर्विंशत्यंगुलैर्वा स्यादथवा केवलं चतुर्विंशतिलवैर्भूम्यां यथा कुंडाकारस्तथा कुर्यादित्यर्थः । तदुक्तं शारदातिलके । यावान्कुंडस्य विस्तारः खननं तावदीरितमिति । तथा गणेशविमर्शिन्यां । चतुर्विंशांगुलायामं तावत्खातसमन्वितमिति । सिद्धांतशेखरे । खातं कुंडप्रमाणं स्यादूर्ध्वमेखलया सहेति ।

खातं कुंडाकारं तिथ्यंशैः १५ र्वा जिनांशकैः २४ कुर्यात् । कुंडस्य मेखलानामुच्छ्रूतिसह-
जिनलवैरथ स्याद्वा ॥ १३४ ॥ तेषां मध्ये वेद ४ भागैस्ततश्च द्व्यंशेनोच्चः कुंडवन्ना-
भिरुक्तः । अब्जाकारो वा न पद्मेथ खाताद् द्व्यंशाभ्यां वांशेन वै कंठ उक्तः ॥ १३५ ॥

प्रतिष्ठासारसंग्रहेऽपि । त्रिपंचमेखलापक्षं ज्ञात्वा शेषमधः खनेदिति ॥ १३४ ॥ अथ नाभिकंठौ शालिन्याह ॥ तेषामिति ॥ तेषां कुंडानां मध्ये वेदभागैश्चतुर्भिरंशैस्ततो विस्तृतः द्व्यंशाभ्यामुच्चः कुंडवत्कुंडाकारः तथाब्जाकारः पद्माकारो वा नाभिः स्यादित्यर्थः । स नाभिः पद्मे पद्मकुंडे न स्यात् । तत्र कर्णिकायाः सत्वात् । अथानंतरं खातात्कुंडगर्तात् द्व्यंशेन द्व्यंगुलेन अथवांशेन एकांगुलेन कंठ उक्तः कथित इत्यर्थः । तदुक्तं शारदातिलके । कुंडानां कल्पयेदंतर्नाभिमंबुजसन्निभां । तत्कुंडाद्यनुरूपां वा मानमस्य निगद्यते । मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतो मता । नेत्रवेदांगुलो वापि पद्मे नाभिं च वर्जये-

दिति । कंठमानं सोमशंभौ । बहिरेकांगुलः कंठो द्व्यंगुलः क्वचिदागम इति । पिंगलामतेपि । खातादेकांगुलं त्यक्त्वा मेखलानां स्थितिर्भवेदिति । क्रियासारे । नाभियोनिसमायुक्तं कुंडं श्रेष्ठं त्रिमेखलमिति ॥ १३५ ॥ त्रिमेखलापक्षांतराणि शार्दूलविक्रीडितेनाह ॥ तस्मादिति ॥ तस्मात्कंठान्नवषट्त्रिभागैः क्रमेणोन्मितं मेखलानामौच्चयं उच्छ्रायः अथवा नवपंचद्विमितं औच्चयं चतुस्त्रिद्व्यंशैः क्रमेण ततिर्विस्तारः स्यादित्यर्थः । ताः मेखलाः तिस्रः स्युरथवा क्रमात् द्वादशाष्टचतुर्भिरुच्छ्रिताः चतुर्भिर्विस्तृताश्च कुंडानुरूपाः कुंडाकारा अमूः मेखलाः सुसमा अवक्राः स्युरित्यर्थः । कुंडार्के मेखलालक्षणं ।

तस्माद्रंध्र ९ रसा ६ ग्नि ३ भागविमितं स्यान्मेखलानामिहाप्यौच्चयं वाथ च गो ९ शरा ५ क्षि २ विमितं वेदा ४ ग्नि ३ नेत्रै २ स्ततिः । तिस्रस्तास्त्वथवार्क १२ नाग ८ जलनिध्यं ४ शैः क्रमादुच्छ्रिता वेदैः ४ स्युः किल विस्तृताश्च सुसमाः कुंडानुरूपा अमूः ॥ १३६ ॥

स्युर्बहिर्मेखलास्ता नंदा ९ ग ६ त्र्यु ३ च्चवेद ४ त्रि ३ कर २ विततय इति । अत्र श्रीमत्तातचरणाः कुंडार्कपद्मिन्यां । कंठाद्बहिर्मेखला भवंति तत्राद्या मेखला नवांगुलोच्चा चतुरंगुलविस्तारा तस्या बहिः षडंगुला त्र्यंगुलविस्तारा तस्या बहिः तृतीया त्र्यंगुला द्व्यंगुलविस्तारेति । एवमेव रघुवीरदीक्षितैस्तट्टीकायामप्युक्तं । तथैव श्रीमद्रामवाजपेयिभिरप्युक्तं । नव ९ र्तु ६ रामांश ३ कतुंगतामतेति । प्रमाणमपि तट्टीकायां प्रथमाब्ध्यंगुलायामा उन्नता सा नवांगुलैः । मध्यमा त्र्यंगुला कार्या तृतीया तु यमांगुलैरिति । द्वितीयतृतीययोरुच्चता प्रथमातस्त्रिभागोनतयार्थादेवेति पक्षो बहुभिरिष्ट इत्यंतमुक्तं ।

अत्र कुंडार्के कैश्चित्पाठांतरं कल्पितं सूर्याक्षब्युच्चेति तत्प्राचीनपुस्तकबाहुल्ये तथानुक्तत्वादुपेक्ष्यं । अथ द्वितीयपक्षः क्रियासारे । प्रधानमेखलोत्सेधमुक्तमत्र नवांगुलं । तद्बाह्यमेखलोत्सेधं पंचांगुलमिति स्मृतं । तद्बाह्यमेखलोत्सेधमंगुलद्वितयं क्रमात् । चतुस्त्रिद्व्यंगुलो व्यासो मेखलात्रितयस्य त्विति । द्वादशांगुलमेखलापक्षः प्रयोगसारे । सात्विकी मेखला पूर्वा विस्तृता द्वादशांगुला । द्वितीया राजसी प्रोक्ता मेखलाष्टांगुलैस्ततः । तृतीया मेखला ख्याता तामसी चतुरंगुला । पृथग्विस्तारमेतासां चतुरंगुलमानतः इति । तथाचाचार्याः । सत्वपूर्वकगुणान्विताः क्रमाद्द्वादशाष्टचतुरंगुलोन्नताः । सर्वतोऽगुल-

तर्के ६ षु ५ वेदा ४ ग्नि ३ यमां २ शकैर्वा व्यासस्तु तासामथ चोन्नताश्च ।
अंकै ९ स्तदाद्या ह्यपराः शरां ५ शैरूनाश्च पंचापि सुमेखलाः स्युः ॥ १३७ ॥

चतुष्कविस्तृता मेखलाः सकलसिद्धिदा मताः इति ॥ १३६ ॥ अथ पंचमेखलापक्षमिंद्रवज्रयाह ॥ तर्केष्विति ॥ षट्पंचचतुस्त्रिद्व्यंगुलैस्तासां मेखलानां प्रथमादिक्रमेण व्यासो विस्तारः । अथच आद्या नवभिरंशैरुन्नतोच्चेत्यर्थः । अपराः द्वितीयाद्याः पूर्वपूर्वापेक्षया पंचमांशैरूनाः तत्राद्याया उच्चता ९ द्वितीयायाः ७।१।२ तृतीयायाः ५।६।१ चतुर्थ्याः ४।४।७ पंचम्याः ३।५।४ एवं पंच सुष्ठु मेखलाः स्युरित्यर्थः । सिद्धांतशेखरे । षड्बाणाब्धिवह्निनेत्रैर्मिताः स्युः पंचमेखला इति । लक्षणसंग्रहे । पंच वा मेखलाः कार्याः षट्पंचाब्धित्रिपक्षकैः । प्रथमा कुंडसहितांतरोत्सेधनवांगुलेति ॥ १३७ ॥

अथैकमेखलाद्विमेखलापक्षमनुष्टुभाह ॥ एकेति ॥ यदैकमेखला तदा चतुरंगुलोत्सेधविस्तृता अथवा षडंगुलोत्सेधविस्तृता कार्या। यदा द्वे मेखले कर्तव्ये तदा तु प्रथमा चतुरंगुलोच्चा द्वितीया त्र्यंगुलोच्चा तथैव चतुर्भिस्तिसृभिरंगुलैश्च पुष्टा विस्तृता इत्यर्थः। तदुक्तं लक्षणसंग्रहे। चतुरंगुलविस्तारोत्सेधा वैकैव मेखलेति। पिंगलामते। एका षडंगुलोत्सेधविस्तारा मेखला मतेति। तंत्रांतरे। षष्ठांशेनाष्टमांशेन मेखलाद्वितयं विदुरिति ॥ १३८ ॥ अथोक्तमेखलानामुत्तमत्वादींद्रवज्रयाह ॥ ता

एका वेदां ४ गुला वापि तर्का ६ गुलमथापि वा।
द्वे मेखले वेद ४ गुणां ३ शैस्ताः पुष्टास्तथैव ताः ॥ १३८ ॥
ताः पंच मुख्या अथ मध्यमोत्तमास्तिस्रस्तथा द्वे इह मध्यमाधमे।
एका तु चोक्ता ह्यधमाधमाधमाः कर्तुः स्थलाधिक्यत एव शक्तितः ॥ १३९ ॥

इति ॥ ता उक्तमेखलाः पंच मुख्याः श्रेष्ठाः तथा तिस्रः मध्यमा उत्तमाश्च द्वे मेखले मध्यमाधमे एका मेखला त्वधमाधमाधमाश्चेत्यर्थः। ताः सर्वा अपि स्थलस्य मंडपदेशस्य आधिक्यं प्रशस्तता यथा तथा ज्ञात्वा कार्याः। अथवा कर्तुर्यजमानस्य शक्तितः शक्त्या वा स्युरिति शेषः। उक्तं लक्षणसंग्रहे। मुख्यास्तु पंच ताः प्रोक्ता मध्यमास्तिस्र एव तु। द्वे स्याताधमे पक्षे एका सा त्वधमाधमेति। तथा क्रियासारेऽपि। नाभियोनिसमायुक्तं कुंडं श्रेष्ठं त्रिमेखलं। कुंडं द्विमेखलं मध्यं

नीचं स्यादेकमेखलमिति ॥ १३९ ॥ अथ कुंडाना योनिं शार्दूलविक्रीडितेनाह ॥ योनिरिति ॥ योनिः कुंडयोनिः तस्याः विस्तृतिर्विस्तारश्च दैर्घ्यं च तयोर्घातः गुणनं तदेव फलं यस्या एतादृशी स्यात् । सा सूरिभिः पंडितैर्द्वेधा द्विप्रकारा स्मृता कथिता । तत्राद्याश्वत्थपत्राकृतिर्यस्याः पुनः अन्या द्वितीया गजोष्ठाकृतिः सा द्वेधापि मेखलानां भिदा पक्षांतरभेदेन पंचधा पंचप्रकारा कथ्यते । तासां सर्वासां योनीनां करणं करणप्रकारं यथा प्राक्तनैः रुचिरं यथा साधितं तथा ब्रवीमि कथया-

योनिर्विस्तृतिदैर्घ्यघातफलका द्वेधा स्मृता सूरिभिश्चाद्याश्वत्थदलाकृतिः पुनरिहान्या स्याद्गजो-ष्ठाकृतिः । अत्र स्यादपि मेखलोद्भवभिदा सा पंचधा कथ्यते सर्वासां करणं ब्रवीमि रुचिरं यत्प्राक्तनैः साधितं ॥१४०॥ तत्राश्वत्थदलाकृतिर्वृतिभवा ह्यब्ध्यस्त्रिजा वोच्यते कुण्डार्कोक्तम-तेन वृत्तकरणाद्युक्तं यथा पूर्ववत् । सा चाश्वत्थदलाकृतिः पुनरियं सा कुण्डसिद्ध्युक्तवच्चाब्ध्यस्त्रा-द्भवतीह हस्त्यधरवद्विस्तारदैर्घ्या भवेत् ॥ १४१ ॥ दीर्घा रसांशै ६ स्तु तथैव चोच्चा स्थला-त्तथा वेदलवैस्तता च । एकाब्धिभागैर्यदि मेखला स्यात्तदा च योनिर्भवतीयमेव ॥ १४२ ॥

मीत्यर्थः । योनेर्दैर्घ्यविस्तारघातकरणमुक्तं विश्वकर्मणा । परस्परवधे जातं तत्र क्षेत्रफलं बुधाः (स्फुटं) । आनयेत्तत्फलं क्षेत्रे विभागं परिकल्प्य चेति । सिद्धांतशेखरे । अश्वत्थपत्रवद्योनिर्गजोष्ठप्रतिमाथवेति ॥१४०॥ स्पष्टम् ॥१४१॥ अथ चतुरंगुलमे-खलापक्षे योनिमुपजात्याह ॥दीर्घेति॥ षडंशैर्दीर्घास्तथा षडंशैरेव स्थलादुच्चा तथा चतुर्भिर्भागैस्तता विस्तृता योनिः स्यात् ।

यदा चतुर्भिर्भागैर्विस्तृतोच्चा एकैव मेखला स्यात्तदेयमेव योनिर्भवतीत्यर्थः। तदुक्तं कोटिहोमपद्धत्यां। षडंगुलैकमेखलापक्षेऽन्यथोक्ता तंत्रांतरे। तुर्यषष्ठद्वादशांशैर्योनिः कुंडायतेर्भवेत्। आयता विस्तृता तुंगा जिनांशेन तदग्रकमिति। कुंडस्य चतुर्थांशेन षडंगुलैर्दीर्घा षडंशेन चतुरंगुलैर्विस्तृता द्वादशांशेन द्व्यंगुलेनोच्चेत्यर्थ इति॥ अथ फलानयनं॥ तत्र फलं २४। अस्य मूलं भुजः ४।७।२ अस्य मूलं चतुर्विंशत्यंशः १।०।१।५ पंचगुणः १।०।१ अस्य रदांशः ०।०।२ अयं पंचगुणे युतः १।०।३ इदं भुजे युक्तं ५।७।५ अथ भुजार्धं २।३।५ अनेन युक्तो भुजो गुणितः १४।४।६ जातं त्र्यस्रद्वयफलम्॥ अथ क्षेत्रकर्णः ७१ अस्यार्धं वृत्तार्धव्यासः ३।४ अस्य वर्गः १२।२ एकादशगुणः १३४।६ शक्रहृतः ९।५ इदं वृत्तार्धद्वयफलं

एका षडंशैस्त्वथ मेखले द्वे ४ स्यातां(ष्टांशे) तदा सूर्य १२ लवैस्तु दीर्घा।
षड्भिर्लवैः सात्र तथा तथोच्चा स्यादष्टभागैरथवांक ९ भागैः॥ १४३॥

त्र्यस्रद्वयफले युक्तं २४।४।६ यवोनं अदोषाय स्वल्पांतरत्वात् पक्षांतरे २३।७॥ १४२॥ अथ षडंगुलैकमेखलापक्षे अष्टांशैर्द्विमेखलापक्षे च योनिमिंद्रवज्रयाह॥ एकेति॥ एकैव मेखला षडंशैरथवा द्वे मेखले यदा स्याता तदा योनिः द्वादशांशैर्दीर्घा षडंशैर्विस्तृता तथाष्टभागैरष्टांगुलैरथवा नवभागैरुच्चा। अत्र षडंगुलैकमेखलापक्षेऽष्टांशैर्द्विमेखलापक्षे तु नवभिरंशैरुच्चेति ज्ञेयं। गर्गः। योनिं षडंगुलां तिर्यक् द्वादशांगुलदैर्घ्यकां। अश्वत्थदलसंकाशां किंचिदुन्नमितांगुलामिति। वृद्धवसिष्ठः। योनिश्च पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता। षडंगुलैश्च विस्तीर्णा चायता द्वादशांगुलैरिति॥

अथ फलानयनं ॥ तत्र क्षेत्रफलं ९६ अस्य मूलं भुजः ९।६ अस्य चतुर्विंशत्यंशः ०।३।२ पंचगुणः २।०।२ । अस्य रदांशः ०।०।४ पंचगुणः चतुर्विंशांशे युतः २।०।६ अयं भुजे युक्तो जातः त्र्यस्रद्वयलंबः ११।६।६ । अथ भुजार्धं ४।७ अनेन लंबो गुणितः ५८।१।२ जातं त्र्यस्रद्वयफलं । अथ क्षेत्रकर्णः १४ अर्धं वृत्तव्यासः ७ वर्गः ४९ एकादशगुणः ५३९ शक्रहृतः जातं वृत्तार्धद्वयफलं ३८।४ त्र्यस्रद्वयफले युक्तं ९६।५।२ । स्वल्पांतरत्वाददोषः ॥ १४३ ॥ अथ नवांगुलैर्मेखलात्रयपक्षे योनिमिंद्रवज्रयाह ॥ तिस्र इति ॥ यदा नवांशैस्तिस्रो मेखलास्तदा सूर्यैर्द्वादशभागैर्दैर्घ्यमेव तथाष्टभिर्लवैरत्र विस्तृता तथा सूर्यैर्लवैरुच्चा योनिरुदीरिता कथितेत्यर्थः । तदुक्तं प्रयोगसारे । त्रिभागं मध्यतो योनिमा-

तिस्रो नवांशैर्यदि मेखलास्ताः सूर्यै १२ स्तदा स्यात्खलु दैर्घ्यमेव ।
स्यादष्टभागैरिह विस्तृतोच्चा सूर्यै १२ र्लवैर्योनिरुदीरिता च ॥ १४४ ॥

यामे द्वादशांगुलां । द्वादशांशोच्छ्रितां कुर्यात्किंचित्कुंडनिवेशिनीमिति ॥ अथ फलानयनं ॥ तत्र क्षेत्रफलम् १५० अस्य मूलं भुजः १२।२।१।२ चतुर्विंशत्यंशः ०।३।६।५ पंचगुणः २।३।१।१ अस्य रदांशः ०।०।५ पंचगुणे युक्तः २।३।६।१ अयं भुजे युक्तः १४।६ जातोयं त्र्यस्रद्वयलंबः । अथभुजार्धमेव भूम्यर्धं ६।१।०।५ लंबेन गुणितं ९०।४ जातं त्र्यस्रद्वयफलं । अथ क्षेत्रकर्णः १७।२।६ अस्यार्धं ८।५।३ वर्गः ७५।१।५ एकादशगुणः ८२७२ । शक्रहृतः ५९।०।६ जातं वृत्तफलं त्र्यस्रद्वयफले युक्तं १४९।४।६ त्रियवोनं । स्वल्पांतरत्वाददोषः ॥ १४४ ॥

अथ द्वादशांगुलमेखलापक्षे योनिमिंद्रवज्रयाह ॥ तिस्र इति ॥ यदा तिस्रः सूर्यलवैर्मेखलाः स्युस्तदा तत्र तिथिभागैः पंचदशभागैर्दीर्घा तथा दशभिर्भागैस्तता विस्तृता चतुर्दशभागैरुच्चा योनिर्बुधैः पंडितैः कथितेत्यर्थः। तदुक्तं प्रयोगसारे। स्थितां प्रतीच्यामायामे सम्यक्पंचदशांगुलां। द्विपंचांगुलविस्तारां षट्चतुर्घ्यंगुलां क्रमात्। उक्ताश्वत्थदलाकारां निम्नां कुंडे निवेशितां। त्रयोदशांगुलोत्सेधां योनिं कुंडस्य कारयेदिति ॥ अथ फलानयनं ॥ तत्र क्षेत्रफलं २८० अस्य मूलं भुजः १६।५।५ अस्य चतुर्विंशत्यंशः ०।५।५ पंचगुणः ३।४।१ अस्य रदांशः ०।०।७ पंचगुणे युक्तं ३।५ इदं भुजे युक्तं २०।२।५

तिस्रो यदा सूर्य १२ लवैस्तताः स्युस्तत्रैव योनिस्तिथि १५ भागदीर्घा। दिग्भि १०
लवैरत्र तता तथोच्चा स्याच्छक्र १४ भागैः कथिता बुधैः सा ॥ १४५ ॥ स्वपक्षतिलवै-
र्दीर्घा शक्र १४ भागैस्तता मता। उच्चा रुद्र ११ लवैर्योनिर्यत्र स्युः पंच मेखलाः ॥१४६॥

जातोयं लंबः। अथ भुजार्धं ८।२।६।४ लंबेन निघ्नं १६९।६।१।२ जातं त्र्यस्रद्वयफलं। अथ द्विघ्नक्षेत्रफलं मूलं क्षेत्रकर्णः २३।५।२।५ अर्धं ११।६।५।२ वर्गः १४० एकादशगुणः १५४० शक्रहृतः ११० जातं वृत्तार्धद्वयफलं त्र्यस्रद्वयफले युक्तं २७९।६।१।२ जातं सर्वं फलं यवद्वयोनमदोषाय स्वल्पांतरत्वात् ॥ १४५ ॥ अथ पंचमेखलापक्षे योनिमनुष्टुभाह। यदा पंचमेखलास्तदा योनिर्विंशतिलवैर्दीर्घा चतुर्दशभिर्विस्तृता एकादशलवैरुच्चेत्यर्थः। तथाच पद्धत्यां। पंचमेखलापक्षे तद्विस्तारसमदैर्घ्या योनिः कार्येति सिध्यतीत्युक्तं ॥ १४६ ॥

अथ तासां फलानींद्रवज्रयाह ॥ तासामिति ॥ तासामुक्तयोनीनां क्रमशः फलानि यथा प्रथमायाश्चतुर्विंशतिः २४ द्वितीयायाः ७२ द्वासप्ततिः तृतीयायाः षण्णवतिः ९६ चतुर्थ्याः खतिथ्यः १५० सार्धशतं पंचम्याः अशीत्युत्तरशतद्वयं २८० फलानि स्युः । यदा कर्तुः बोधिपत्राकारा इष्टेत्याद्युत्तरेणान्वयः ॥ १४७ ॥ अथ योनिव्यासानयनमुपजात्याह ॥ तदेति ॥ तदा द्विनिघ्नात्फलाद्यन्मूलं तदेव व्यासस्तेन योनिकुंडवत्सा स्यादित्यर्थः । अथो यदोक्तान्ययोनिकुंडवदिष्टा तदा पंचोत्त-

तासां फलानि क्रमशो जिना २४ श्च द्वासप्ततिः ७२ षण्णवतिः ९६ ख-
तिथ्यः १५० । अभ्राष्टयुग्मा २८० न्यथ बोधिपत्राकारा यदा कर्तुरिहाप्यभीष्टा
॥१४७॥ तदा यम २ घ्नाच्च फलात्तु मूलं व्यासो भवेत्तेन तु कुंडवत्सा । अथो
यदान्या तु शराभ्ररामै ३०५ र्निघ्नाच्च दस्रांकशशी १९२ विभक्तात् ॥ १४८ ॥

रशतत्रयेण गुणिताद्द्विनवत्युत्तरशतेन भक्तात्फलान्मूलं व्यास इत्यादिपूर्वोक्तवत्स्यादित्यर्थः । यथोदाहरणं । तत्रादौ सिद्धे चतुरस्र इत्युक्तरीत्या योनिकरणे नवांशैस्त्रिमेखलपक्षे फलं ९६ द्विगुणं १९२ अस्य मूलं १३।७ इदं चतुरस्रवृत्तव्यासः अस्य चतुरस्रज्या त्रिबाणेत्यादिना ९।६।३ एतन्मितचतुर्भुजैर्यच्चतुरस्रं तस्मिन्पूर्वोक्तयोनिकुंडवत्करणेन योनिर्भवतीत्यर्थः । अथ प्रकारांतरेणोक्तरीत्या योनिकरणे नवांशैस्त्रिमेखलपक्षे फलं ९६ पंचोत्तरत्रिशतेन गुणितं २९२८० द्विनवत्युत्तरशतेन

भक्तं १५२ अस्य मूलं १२।३।१ इदमेवान्ययोनेर्व्यासः अनेन कुंडोक्तवत्करणे योनिः स्यादित्यर्थः ॥ १४८ ॥ अथ योनि-सामान्यलक्षणं स्रग्धरयाह ॥ मूलेति ॥ तस्याः योनेर्मूलेऽधोभागे यत्स्थौल्यं स्थूलता तस्मादुपरि भुवि स्वल्पसंकोचेन युक्ता मध्ये उच्चा अथवा मध्ये सगर्ता सा योनिः भगे योनिकुंडे नच भवति । तथा कुंडानां कोणेऽपि सा नो न स्यादि-त्यर्थः । तस्या योनेः एका मेखला लवेनैकांशेन विस्तृता एकांशेनैवोच्चा रम्या कार्या । अथ योनेः पश्चात्सछिद्रं नालं कार्यं।सा योनिर्मेखलोपरि भवति सबिलवती मध्यमेखलोपरि परिधिस्पृष्टदेशे परिधिपरिस्तरणनिवेशार्थं छिद्रं तेन सहिता।

मूलस्थौल्याच्च तस्यास्तदुपरि भुवि च स्वल्पसंकोचयुक्ता मध्योच्चा वासगर्ता न
च भवति भगे कुंडकोणेऽपि नो सा।रम्या तन्मेखलैका लव १ मितविततोच्चाथ
नालं तु पश्चात्सच्छिद्रं मेखलोपर्यपि सबिलवती चांशतोऽग्रे विशंती ॥ १४९ ॥

वचने परिध्युपलक्षणेन परिस्तरणस्यापि ग्रहणं । दृश्यतेच याज्ञिकानामपि तथैव संप्रदाय इति । लवेनैकांशेनाग्रे यत्कुंडं तस्मिन्विशंती प्रवेशं कुर्वती विरचयेदित्यर्थः । अत्रैकांगुलवर्धनमुक्तं तत्कंठतः खातमध्य एवान्यथा द्व्यंगुलकंठपक्षे त्र्यंगु-लयोन्यग्रवर्धनस्यासंभवाद्वक्ष्यमाणवचनविरोधाच्च । तदुक्तं मात्स्ये । वितस्तिमात्रा योनिः स्यात्षट्सप्तांगुलविस्तृता। कूर्म-पृष्ठोन्नता मध्ये पार्श्वयोश्चांगुलोच्छ्रिता । गजोष्ठसदृशी तद्वदायता छिद्रसंयुता । एतत्सर्वेषु.कुंडेषु योनिलक्षणमुच्यते । मेखलोपरि सर्वत्र अश्वत्थदलसन्निभेति । स्वायंभुवेऽपि । मेखलामध्यतो योनिः कुंडार्धा त्र्यंशविस्तृता। अंगुष्ठमानोष्ठकंठा

कार्याश्वत्थदलाकृतिरिति । अंगुष्ठमानमोष्ठोऽग्रं कंठो मेखला यस्या इति कुंडकल्पलता । शारदातिलके । नार्पयेत्कुंडको- णेषु योनिं तां तंत्रवित्तम इति । तथा । योनिकुंडे तथा योनिं पद्मे नाभिं च वर्जयेदिति । प्रयोगसारे । योन्याः पश्चि- मतो नालमायामे चतुरंगुलं । द्वित्र्येकांगुलविस्तारं क्रमान्न्यूनाग्रमिष्यत इति । सोमशंभुरपि । तासामुपरि योनिः स्यान्म- ध्येश्वत्थदलाकृतिरिति । शारदातिलके । एकांगुलं तु योन्यग्रं कुर्यादीषदधोमुखमिति । जिनांशेन तदग्रकमिति तंत्रांतरे। सिद्धांतशेखरे तु स्यादोष्ठः कंठेन संमित इति। अत्र कल्पलता । कंठेन संमितः कंठसमो नाधिक इत्यर्थः । किंचित्कुंडनिवे- शितामित्यनेन एकांगुलकंठपक्षे यवेन यवाभ्यां वाधिक्यं कल्प्यमित्यनेन वर्धने विकल्प इति । त्रैलोक्यसारेऽपि । एकांगु-

इंद्रपावकार्कभूदिग्गता स्यादुदङ्मुखीप्राङ्मुखीतरा ।
सा गुरोरथो कुंडके स्मृता दक्षिणेथवा पश्चिमेथवा ॥ १५० ॥

लोच्छ्रिता सा तु प्रविष्टाभ्यंतरे तथेति । पंचरात्रे । स्थलादारभ्य नालं स्याद्बाह्यमेखलया सममिति । शारदातिलके । स्थलादारभ्य नालं स्याद्योन्या रंध्रे सरंध्रकमिति । आगमकल्पलतायां यामले । नालमेखलयोर्मध्ये परिधिस्थापनाय च । रंध्रं कुर्यात्तथा विद्वान्द्वितीयमेखलोपरीति ॥ १४९ ॥ अथ दिग्विशेषकुंडेषु योनिस्थानानि लोचनाख्यवृत्तेनाह ॥ इंद्रेति ॥ इंद्रवह्नियमानां दिक्षु चतुरस्रयोन्यर्धचंद्राकारकुंडेषु सा योनिरुदङ्मुखी कार्या इतरा त्र्यस्रवृत्तषडस्रपद्माष्टास्रेषु तु प्राङ्मुखी कार्येत्यर्थः । अत्राग्नेयकुंडे योनिविधानं सर्वचतुरस्रवृत्ताद्यभिप्रायेण । गुरोराचार्यकुंडे सा योनिर्दक्षिणे अथवा पश्चिमे

कार्येत्यर्थः । अत्र पंचकुंडीपक्षे दक्षिणे योनिराचार्यकुंडस्य अन्यत्र पश्चिमे इति ज्ञेयं । सोमशंभौ । पूर्वाग्नियाम्यकुंडानां योनिः स्यादुत्तरानना । पूर्वानना तु शेषाणामीशान्येन्यतरा मतेति । सिद्धांतशेखरे । इंद्राग्नियाम्यकुंडेषु योनिः सौम्य-मुखी स्मृता । योनिः पूर्वाननान्येषु पूर्वेशानैतरा स्मृतेति । त्रैलोक्यसारेपि । नवमस्यापि कुंडस्य योनिर्दक्षिणतः स्थितेति ॥ १५० ॥ अथ गजोष्ठसदृशीयोनिकरणं कामदयाह ॥ अथेति ॥ योनेर्दीर्घताज्ञापकं यत्सूत्रं तदेव लंबको लंबो येन प्रकारेण भवति तथा येन प्रकारेण योनेर्विस्तृतिर्भूमिका भवति तथा गुणास्रकं त्र्यस्रं कुरु । ततो विस्तृतेर्दलेन वृत्तार्धद्वये

अथच दीर्घतासूत्रलंबको भवति विस्तृतिर्येन भूमिका । कुरु गुणास्रकं
विस्तृतेर्दलाद्वृतिदलद्वये स्याद्गजाधरी ॥ १५१ ॥ कोटिलक्षायुते होमे
द्विसार्धकरसंमिता । वर्जयित्वा रुद्रहोममीशान्यां ग्रहवेदिका ॥ १५२ ॥

कृते सति गजाधरी गजोष्ठसदृशी योनिर्भवतीत्यर्थः । उक्तंच पद्धतौ । अत्र योनेर्गजोष्ठसदृशत्वं पश्चिमतो विस्तारचतुर्थांशेन वृत्तद्वयकरणादवगंतव्यमिति । तेन गजोष्ठसदृश्या योनेः फलस्यावश्यकत्वं नास्तीति ध्वन्यते ॥ १५१ ॥ अथांगभूता ग्रहवेदीमनुष्टुब्वसंततिलकाभ्यामाह ॥ कोटीति ॥ कोटिहोमे द्विहस्ता लक्षहोमे सार्धहस्तायुतहोमे करसंमितेत्यर्थः । अन्य-त्रायुतादिग्रहहोमातिरिक्ते एकहस्तैव । महारुद्रहोमं वर्जयित्वा हित्वा सा ग्रहवेदीशान्यां स्यादित्यर्थः । रुद्रपद्धतौ तत्र रुद्रवेद्युक्तत्वात् । तदुक्तं ग्रहपीठमालायां मात्स्ये । गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृतां । वप्रद्वयावृतां वेदिं वितस्त्युच्छ्राय-

संमितां । संस्थापनाय देवानां चतुरस्रामुदक्प्लवां । लक्षहोमग्रहमखे वितस्तित्रयसंमितां । कोटिहोमग्रहमखे तां वितस्तिचतुष्टयामिति ॥ १५२ ॥ कर इति । करः एकहस्त अर्धदोर्वा अर्धहस्तो वा वेदेरुच्छ्रय उच्चता । सा वेदिरेकहस्ता तता च विस्तृता च कार्या । तस्याः परितः द्व्यंगुलत्र्यंगुलोच्चौ द्वौ वप्रौ चयौ कार्यौ । यदि तृतीयोपि कर्तव्यस्तदा द्वितीयतुल्यः कार्यः । ते त्रयोपि द्व्यंगुलाभ्यां विस्तृताः कार्या इत्यर्थः । उक्तंच ग्रहपीठमालायां मात्स्ये । वप्रद्वयावृतां वेदिं वितस्त्युच्छ्रायसंमितामिति । तथा तत्रैव । द्व्यंगुलेनोच्छ्रितो वप्रः प्रथमः समुदाहृतः । त्र्यंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यंगुलश्चैव विस्तारः

करोऽर्धदोर्वोच्छ्रय एकहस्ता तता च तस्याश्वि २ गुणां ३ गुलोच्चौ । वप्रौ तृतीयो यदि चेद्द्वितीयतुल्यस्तातास्ते च यमांगुलाभ्यां ॥ १५३ ॥ एवं वेद्यश्चापि तिस्रः प्रकुर्याच्छोचिष्केशः ऋव्यभुग्वायुदिक्षु । स्थाप्यान्खेटान्मातृकाश्चापि वास्तून्क्षेत्रेशं च स्थापयेत्तासु यागे ॥ १५४ ॥

सर्वेषां कथ्यते बुधैरिति ॥ १५३ ॥ एवमाग्नेयादिविदिक्षु वेदीकरणं शालिन्याह ॥ एवमिति ॥ एवमुक्तप्रकारेण तिस्रो वेद्यः अग्निनिर्ऋतिवायूनां दिक्षु प्रकुर्यादित्यर्थः । तासु कृतचतुर्वेदीषु स्थाप्यान् स्थापनयोग्यांस्तल्लक्षणलक्षितान्क्रमेण यागे प्रतिष्ठादौ खेटान्ग्रहान् षोडश सप्त वा मातृकाः वास्तून् शिख्यादिवास्तुदेवताः क्षेत्रेशं क्षेत्रपालं च स्थापयेत् । तदुक्तं मात्स्ये । मंडपैशानभागे तु ग्रहवेदी करोन्मितेति । मंथानभैरवतंत्रे । शेषवेद्यां ततः ख्यातं हस्तमेकं तु विस्तरे । उच्छ्रायोर्कांगुलः प्रोक्तः स्नानवेदी द्विहस्तका । आग्नेय्यां मातृकावेदी वास्तुवेदी च नैर्ऋते । क्षेत्रपालस्य वायव्यामीशान्यां च नवग्रहा इति ॥ १५४ ॥

अथायुतहोमादौ द्विहस्तादिकुंडं पूर्वमुक्तमतस्तत्तद्व्यासानयनमार्ययाह ॥ द्विगुणादाविति ॥ कुंडव्यासे द्वित्रिगुणादिकर्तव्ये द्व्यादिभिर्निघ्नो गुणितो यो व्यासवर्गस्तस्य मूलं यद्भवति तदेवेष्टव्यासः स्यादित्यर्थः । तथाहि । द्विहस्तकुंडव्यासे कर्तव्ये एकहस्तकुंडवृत्तव्यासवर्गः द्विगुणः कार्यस्तन्मूलं द्विहस्तकुंडवृत्तव्यासः स्याद्भवति । एवं त्रिहस्ते त्रिगुणश्चतुर्हस्ते चतुर्गुण इत्यादिः । इत्येवंप्रकारेण श्रीमद्गुरोस्तातचरणानामुक्तिः कुंडार्कपद्मिन्यां सर्वोत्कर्षेण वर्तते । अत्रोदाहरणं । यथैकहस्ते चतुरस्रवृत्तव्यासः ३३।७५ अस्य वर्गः ११५२ अयं द्विगुणः २३०४ अस्य मूलं ४८ अयं द्विहस्तचतुरस्रवृत्तव्यासः । अस्या-

द्विगुणादौ कर्तव्ये द्व्यादिघ्नव्यासवर्गमूलं यत् । इष्टो व्यासः स्यादिति जयति श्रीमद्गुरोरुक्तिः
॥ १५५ ॥ सपादे स्तृतेरब्धिवज्र्यं १४४ शकस्तु विनिघ्नो धरातर्कचंद्रै १६१ स्तृतिः स्यात् ।
खवेदांशक ४० स्तान ४९ निघ्नोऽपि सार्धे रसांकां ९६ शकः सप्तसूर्यै १२७ र्विनिघ्नः ॥ १५६ ॥

र्धेन वृत्तं कृत्वा तस्मिन्पूर्वोक्तचतुरस्रवत्सर्वं कृत्ते दशसहस्रहवनोपयोगिद्विहस्तचतुरस्रमुत्पद्यत इति दिक् ॥ १५५ ॥ अथ व्यासस्य सपादसार्धसत्रिपादद्विगुणादिकरणं भुजंगप्रयाताभ्यामाह ॥ सपादेति ॥ व्यासे स्वपादेन सहिते कर्तव्ये स्तृतेरेकहस्तव्यासस्य चतुश्चत्वारिंशदुत्तरशतांशः एकषष्ट्युत्तरशतेन निघ्नः सन् स्वचतुर्थांशेन सहितो व्यासः स्यादित्यर्थः । तथा सार्धे कर्तव्ये स्तृतेश्चत्वारिंशदंशः एकोनपंचाशतानिघ्नो व्यासः स्यात् । तथा सत्रिपादे कर्तव्ये स्तृतेः षण्णवत्यंशः सप्तविंशत्युत्तरशतेन निघ्नो व्यासः स्यात् । तथा द्विगुणे कर्तव्ये स्तृतेर्द्वादशांशः सप्तदशभिर्निघ्नो व्यासः स्यादित्यर्थः । तथा

ज्यकाः भुजा अपि अनया व्यासानयनरीत्या क्रमेण स्युरित्यर्थः । अयं प्रकारः श्रीगुरोस्तातचरणप्रसादान्मया उक्तः कल्पित इत्यर्थः । तथा चोदाहरणं व्यासः ३३।७५ अस्य चतुश्चत्वारिंशदुत्तरशततमो भागः ०।१।७।०।६ अयमेकषष्ठ्युत्तरशतेन निघ्नः ३७।७६ अयमेव सपादव्यासः।तथा सार्धे व्यासखवेदांशः ०।६।६।२ अयमेकोनपंचाशता निघ्नः ४१।४।२।२ तथा सत्रिपादे व्यासषण्णवत्यंशः ०।२।६।५ अयं सप्तविंशत्युत्तरशतेन निघ्नः ४४।७।१ तथा द्विघ्ने व्यासद्वादशांशः २।६।५ अयं सप्तदशनिघ्नः ४८।०।५ अत्र पंचयूकाधिक्यं तददोषाय यवोनत्वात् । अथ भुजार्थे किंचिदुदाहरणं तत्रैकह-

भवेत्सत्रिपादे द्विनिघ्ने त्विनांशो १२ विनिघ्नः स वै सप्तभू १७ भिः स्तृतिः स्यात् ।
तथा स्युर्ज्यकाव्यासरीत्या क्रमेण प्रकारोऽयमुक्तो गुरोर्हि प्रसादात् ॥ १५७ ॥

स्तचतुरस्रभुजः २४ अस्य चतुश्चत्वारिंशदुत्तरशततमोंशः ०।१।२।५।२ एकषष्ठ्युत्तरशतेन निघ्नः २६।६।३।५।२ जातोयं सपादहस्तकुंडभुजः । अथ सार्धे भुजचत्वारिंशदंशः ०।४।६।३।२ ताननिघ्नः २९।३।२ जातोयं सार्धहस्तकुंडभुजः । अथ सत्रिपादे भुजरसांकांशः ०।२ सप्तसूर्यैर्निघ्नः ३१।६ जातोयं सत्रिपादहस्तकुंडभुजः । अथ द्विनिघ्ने भुजद्वादशांशः २ अयं सप्तदशगुणितो जातो द्विहस्तभुजः ३४ अत्र यूकात्रयमधिकं तददोषाय । तथास्य द्वादशांशः २।६।५ सप्तदशनिघ्नः ४८।०।५ अयं चतुर्हस्तकुंडभुज एवं योन्यादिषु ॥ १५६ ॥ १५७ ॥

अथैवं कुंडं निर्माय ताम्रादिना निर्बध्येत्यादि पंचचामरेणाह ॥ विधायेति ॥ उक्तवदुत्तमं कुंडं विधाय ताम्रपत्रकैर्विबध्य तत्कुंडं आम्लजीवनेनाम्लजलेन समुज्ज्वलं कुरु ताम्रपत्राभावतः मृदिष्टिकाभिः विबध्य गोशकृज्जलैः समुज्ज्वलं कुरु सुधामयं चेत्सुधा चुनाइति ख्यातस्तज्जलैः समुज्ज्वलं कुरु । अशक्तितः शक्त्यभावेन यदा तत्कुंडं न कृतं तदा सुचत्वरं स्थंडिलं कुर्वित्यर्थः । उक्तंच पद्धतौ—सर्वं कुंडं ताम्रादिना कार्यं । ताम्रेण लक्षणोपेतं कुर्यान्मृत्तिकयापि वा । तदभावे त्विष्टिकाभिः संबध्य सुदृढं तथेति क्रियासारात् । ताम्रादिकुंडानां शुद्धिरपि तत्रैव । आम्लेन ताम्रजं कुंडं मृन्मयं गोमयांभसा । सौधं च सुधया सम्यक् शोधयेदमरर्षभेति । सौधमितीष्टकासंधिषु सुधादानेन कृतमिति पद्धतिः । समे स्थंडिलचत्वर इत्यमरः ॥ १५८ ॥ अथ पूर्वोक्तस्थंडिलं सलक्षणं रूपकेनाह ॥शुद्धेति॥ शुद्धदेशोद्भवा या मृत्तिका तस्या रजोभिः पांसुभिः समेखलं मेखलासहितं योनिसहितं च करेण सम्मितं हस्तमात्रं प्राक्प्लवं चतुष्कोणमंगुलोच्चं चतुरंगुलोच्चं वा स्थंडिलं वा कुरु । अथवा योनिमेखलाभ्यां वियुक्तं रहितं चतुरंगुलोच्चं

विधाय कुंडमुत्तमं विबध्य ताम्रपत्रकैः समुज्ज्वलं तदाम्लजीवनेन कुर्वभावतः । मृदिष्टिकाभिरत्र गोशकृज्जलैः सुधामयं सुधाजलैरशक्तितो यदा न तत्सुचत्वरं ॥ १५८ ॥

शुद्धमृत्तिकारजोभिरेव वा समेखलं स्थंडिलं सयोनिकं तु कुंडसंमितं कुरु । प्राक्प्लवं तु सागरास्रमंगुलोच्चमत्र वा योनिमेखलावियुक्तसागरांगुलोच्चकं ॥ १५९ ॥

कुर्वित्यर्थः। अत्र प्रथमवाकारः कुंडस्थंडिलयोर्विकल्पार्थकः । स्थंडिलेऽपि मेखलादिराहित्यसाहित्यविकल्पार्थो द्वितीयः। पद्धतौ हस्तमात्रेणेत्युपलक्षणं होमबहुत्वे स्थंडिलं महत्कार्यं। अर्थात्परिमाणमिति कात्यायनवचनादिति । कल्पलताया अप्येवमेवाशयः। स्थंडिले मेखला उक्ताः सूतसंहितायां। स्थंडिले मेखलाः कार्या कुंडोक्तस्थंडिलाकृति । योनिस्तत्र प्रकर्तव्या कुंडवत्तंत्रवेदिभिरिति। तंत्रांतरेपि। समेखलं स्थंडिलं तु प्रशस्तं होमकर्मणि। कंठं तु वर्जयेत्तत्र खाते कंठः प्रकीर्तित इति। अन्यत्रापि। स्थंडिले मेखलादीनां प्राप्तिरस्त्येव शास्त्रतः। अद्ध्यायतनधर्मा हि यतस्ते मेखलादय इति। ननु अद्ध्यायतनधर्मत्वेनैव सर्वत्रापि प्राप्तौ पुनर्वचनारंभो व्यर्थ इतिचेन्न। वचने स्थंडिल इति विशेषोपादानात् आयतनांतरनिवृत्तिः। बौधायनोपि। कुंडवन्मेखलां कृत्वा योनिं कृत्वा ततः परं। बौधायनमते प्रोक्तं स्थंडिलं चतुरस्रकमिति। व्यतिरेकमुखेनास्यावश्यकता तत्रैवोक्ता। मेखलारहिते होमः सर्वकर्मसु गर्हितः। हविराधारतस्तासां मेखलानां प्रयोजनमिति। नचात्रवाक्ये स्थंडिलशब्दाश्रवणात्कुंडविषयमेवास्येति वाच्यं। तत्र मेखलारहिते शोक इति वाक्येन दोषांतरप्रतीतेरित्यंतमुक्तं। पद्धतौ तु अत्र कश्चित्कुंडवत्स्थंडिलेपि मेखलायोन्यादि कार्यमित्याह तदज्ञानविजृंभितमित्यारभ्य तस्मात्स्थंडिले मेखलादयो न भवंतीति सिद्धं। एतेन स्थंडिले योन्याकारत्वमपि परास्तं। चतुरस्रत्वस्य विशेषश्रुतत्वादित्यलमतिक्षोदेनेत्यंतं सविस्तृतमुक्तं विस्तरभयादत्र न लिखितं। वायवीयसंहितायां । अथाग्निकार्यं वक्ष्यामि कुंडे वा स्थंडिलेपि वेति। क्रियासारे। कुंडमेवंविधं न स्यात्स्थंडिलं च समाश्रयेदिति। सूतसंहितायां। मध्यवेद्याश्चतुर्दिक्षु कुर्यात्कुंडचतुष्टयं। कुंडाभावे स्थंडिलेषु होमः कार्यो यथाविधिरिति । इत्यादिवचनचयैः कुंडस्थंडिलयोर्विकल्पवत्तदंगानामपि तथात्वाद्धि-

कल्पो युक्तः । क्रियासारे । होमेष्टदिक्षु प्राक्प्रहः प्रागुदक्प्रवणेथ वा । उदक्प्रहः प्रदेशो वा स्थंडिलस्य स्थलं स्मृतमिति । शारदायां । हस्तमात्रेण तत्कुर्याद्वालुकाभिः सुशोभनं । अंगुलोत्सेधसंयुक्तं चतुरस्रं समंतत इति । पदार्थादर्शे । चतुःकोण-मध्यंगुलोत्सेधमेक इति । कुंडसिद्धिटीकायामपि तंत्रांतरे । मृदा सुवर्णया वापि सूक्ष्मवालुकयापि वा । अंगुलोच्चं तथा वेदांगुलोच्चं स्थंडिलं विदुरिति ॥ १५९ ॥ अथोक्तमुपसंहरन्नुक्तमंडपादौ न्यूनाधिककरणे दोषमनुष्टुभाह ॥ अथेति ॥ मंड-पादीनामादिपदेन कुंडवेदिध्वजपताकादीनां संग्रहः । यथायथोक्तं तत्तथैव कार्यमन्यथा करणे न्यूनाधिकत्वे सति बहवो दोषाः स्युर्भवंतीत्यर्थः । शिवमितिपदं समाप्तिद्योतकं । जयद्रथयामले । सूत्राधिके सुहृद्द्वेषो मानहीने दरिद्रता । वाग्रोधः कंठहीने स्यादसिद्धिर्न्यूनखातके । अधिके चासुरो भोगो मानेनाधिकमेखले । व्याधयः संप्रवर्तंते वीतोष्ठे स्यादपस्मृतिः ।

अथात्र मंडपादीनां यद्यदुक्तं तु तत्तथा । कार्यं न्यूनाधिकत्वे तु दोषाः स्युर्बहवः शिवं ॥ १६० ॥

उच्चाटः स्फुटिते छिद्रे संकुले वाच्यता भवेदिति । विश्वकर्मापि । खातेधिके भवेद्रोगी हीने धेनुधनक्षयः । वक्रकुंडे च संतापो मरणं छिन्नमेखले । मेखलारहिते शोकोभ्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुंडं यत्कंठवर्जितमिति । क्रियासारेपि । न्यूनाधिकप्रमाणं यत्कुंडं कर्करमेखलं । श्रृंगाररहितं यच्च यजमानविनाशकृदिति । आगमांतरेपि । माना-धिके भवेन्मृत्युर्मानहीने दरिद्रतेत्यादि । सिद्धांतशेखरेपि । मानहीने महाव्याधिरधिके शत्रुवर्धनं । योनिहीने त्वपस्मारो वाग्दंडः कंठवर्जित इति । वसिष्ठसंहितायामपि । अनेकदोषदं कुंडमत्र न्यूनाधिकं यदि । तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं शुभमिच्छतेति सर्वं शिवं ॥ १६० ॥

अथ ग्रंथपूर्तौ स्वपूर्वजवर्णनं स्रग्धरयाह ॥ भारद्वाजेति ॥ भरद्वाज एव भारद्वाजस्तस्य विस्तारवति कुले विठ्ठलस्यापत्यं पुमान्विश्वनाथनामा समभवद्यः प्रत्यहं सुरेंद्रान्देवश्रेष्ठान्श्रौतस्मार्तकर्मभिरप्रीणयत्तस्य पुत्रः कांतिमान् भास्कराख्यस्तदनु सम्यगुदितस्तत्सुतः श्रेष्ठः जड्योपनामा विदुषां मुकुटमणिर्मुख्यः असौ दीक्षा संजाता यस्य एतादृशः कृष्णाख्योऽभूदित्यर्थः ॥ १६१ ॥ तस्येति ॥ तस्य कृष्णशर्मणः पुत्रेण रामचंद्रेण मयेति शेषः । तत्पादस्य रजः परागस्तं स्वशिरस्यवधार्य कुंडरत्नावली शुभा सर्वलक्षणसंयुक्ता रचिता कृतेत्यर्थः ॥१६२॥ अथ कुंडरत्नावलीं स्रग्विण्या प्रशंसति ॥ कुंडेति ॥ इयं कुंडरत्नावली येन पुरुषेण कंठे स्वगले धृता धारिता सः याज्ञिकसभायां पूज्येषूत्तमः स्यादित्यर्थः । पुनः कुंडशास्त्रे तस्य सुंदरा समीचीना गतिः स्यादित्यर्थः । मणौ सूच्या इव तथा मंडपादावपि गतिर्ज्ञानं स्यात् ॥ १६३ ॥

भारद्वाजान्ववाये महति समभवद्वैठ्ठलिर्विश्वनाथोऽपीष्टापूर्तैः सुरेंद्रान्प्रतिदिनमिह योऽप्रीणयत्तस्य पुत्रः । भास्वांश्छ्रीभास्करो वै तदनु समुदितस्तत्सुतोऽभूद्वरिष्ठो जड्योपाह्वस्तु विद्वन्मुकुटमणिरसौ दीक्षितः कृष्णशर्मा ॥१६१॥ तस्य पुत्रेण तत्पादरजः कृत्वा स्वमूर्धनि । रामचंद्रेण रचिता कुंडरत्नावली शुभा ॥ १६२ ॥ कुंडरत्नावली येन कंठे धृता याज्ञिकानां समाजे स पूज्योत्तमः । कुंडशास्त्रे मणौ तस्य सूच्या इव स्याद्गतिः सुंदरा मंडपादावपि ॥ १६३ ॥

अथ विदुषोनुष्टुभा प्रार्थयते ॥ भ्रांत्येति ॥ मयेह कुंडरत्नावल्यां भ्रांत्या चित्तविक्षेपेण प्राचीनानां पूर्वाचार्याणां मततो विरुद्धं यत्किंचिल्लिखितं तद्दयालवो विद्वांसः शोधयंतु शुद्धिं कुर्वंत्वित्यर्थः ॥ १६४ ॥ अथ ग्रंथसमाप्तिदिवसमनुष्टुभाह ॥ खेति ॥ नवत्युत्तरसप्तदशशततमे शालीवाहनशके १७९० भाद्रपदमासस्य कृष्णपक्षे शिवे तिथावेकादश्यां समापिता स-

भ्रांत्या प्राचीनमततो विरुद्धमिह यन्मया । लिखितं तत्तु विद्वांसः शोधयंतु दयालवः ॥१६४॥
खनंदमुनिभू १७९० शाके भाद्रकृष्णे शिंवे तिथौ । समापिता चार्पिता च कंठे विश्वेश्वरस्य
सा ॥ १६५ ॥ इति श्रीमज्जब्योपाह्वकृष्णदीक्षितबाबूदीक्षितापरनामधेयसूरिसूनुरामचंद्रदी-
क्षितविरचिता कुंडरत्नावली समाप्ता ॥ श्रीमदभिमानिनीदेवताचरणसरोरुहयोरर्पितास्तु ॥

माप्तिं प्राप्ता सा श्रीविश्वेश्वरस्य कंठे अर्पिता प्रापिता चेति सर्वं शिवं ॥ १६५ ॥ यदत्र चोक्तं सदसद्विशोधितुं न प्रार्थये सज्जनपंडितानहं । तमोनुदं तत्तिमिरं विनाशितुं न याचते कोपि हि शुश्रुमो वयं ॥ १ ॥ इति श्रीमज्जब्योपनामकृ-ष्णदीक्षितबाबूदीक्षितापरनामधेयसूरिसूनुरामचंद्रदीक्षितविरचिता स्वकृतकुंडरत्नावलीटीका मंजूषाख्या समाप्ता ॥

---

अयं ग्रंथो मुंबय्यां पाण्डुरङ्ग जावजी इत्येतैः स्वीये निर्णयसागरमुद्रालये रामचंद्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितः ।
शकः १८४१ सन १९१९.
द्वितीयावृत्तिः ।

Printed by Ramchandra Yesu Shedge, at the "Nirnaya-sagar" Press, No. 23, Kolbhat Lane, Bombay.
Published by Pandurang Jawaji Proprietor N. S. Press, No. 23, Kolbhat Lane, Bombay.

